**संज्ञा** :- असन्तानि प्रतिपदिकानि (VI-4-14) प्रक्रियाविशेषः ।

**संज्ञा** :- असन्ता शब्दाः "अत्वसन्तस्य" (VI-4-14).

**उणादि** :- कवसः (442).

# अस

**उणादि** :- अवसः । वेतसः । दिवसः । सुयशाः । सुमनसाः ।
( 397, 398, 399, 400, 401 )

# असानच्

**उणादि** :- शवसानः पन्थाः । जरसानः पुरुषः (243)

# असि

**तद्धितः** :- अस्तातेरर्थे । पूर्व, अधर, अवर

एतेभ्यः क्रमेणैव पुर्, अध् अव् इत्यादेशश्च । पूर्व+असि-पुर्+अस् पुरो वसति । पूर्वस्यां दिशि वसति । एवं अथोरमणीयम् । अव-आगतः ( V-3-39 ).

**उणादि** :- सर्वधातुभ्यः असुन् । चेत-सर-पय ( अस् ) इत्यारभ्य असुन् विहितः (628) तस्यायमपवादः । मिथुनेऽसिः (662) मिथुने उपसर्ग-विशिष्टे धातोः । असुनो अपवादः असिः । स्वरविशेषः – अशो देवने युट्=सु-युट्+अश्+असि सुयशः । असि परेऽपि, असुन् वन् अन्ये आदेशाः, विश्ववेदाः उशना ( 662, 678 )

# असिच

**तद्धितः समासान्तः** :- नित्यमसिच् प्रजामेधयोः ।

अविद्यमाना प्रजाः अप्रजाः । अविद्यमाना मेधा-अमेधाः । दुर्मेधाः । बहुप्रजा निरृतिमाविवेश (V-4-122; 123 )

# असुक्

**आगमः** :– सुप् । आज्जसेरसुक् (VII-1-50).

छः । पितरः सौम्यासः ।

**आगमः** :– तिङ् । अश्व क्यचि (VII-1-51).

अश्वस्यति वडवा ।

# असुङ्

**आदेशः** :– सुप् । पुंसोऽसुङ् । पुमान् । पुमांसौ (VII-1-89).

# असुन्

**उणादि** :– सर्वधातुभ्योऽसुन् (628) अयं उत्सर्गप्रत्ययः (678) चतुर्थपादान्तावधि । असुनि, धातुविशेषेभ्यः आदेश विशेषा अपि भवन्ति । "वसेर्णित्" (657) वस् धातोः असुन् स्यात् । सोऽपि णित् । वासः । चदि-अह्लादने, अस्मात् असुन् आदेश्चकारस्य छः । छन्दः । एवमादि । मिथुने (662) सूत्रात् अस्यापवादः असिः । See. असिः ( 628 & 678 ).

# असे

**कृत्. छ.** :– "तुमर्थे सेसेनसे" (III-4-9)

# अस्तातिः

**तद्धितः** :– दिक् शब्देभ्यः । पुरस्तात् अधस्तात् । सप्तमी । पञ्चमी प्रथमान्तेभ्यः दिक्देशकालवाचिषु (V-3-27).

# आ

इत् । तत्फलम् आदितश्च (VII-2-16) ञिष्विदा - स्विन्नः ।

प्रादिगणपठितः । यदा अद्रव्यवाची लिङ्गसंख्याकारकान्वितो न भवति, तदा निपातसंज्ञां लभते (I-4-58) वाक्यस्मरणयोरङित् उकारानुबन्धरहित एवायम् । ङित् आङ् अन्यः । वाक्यम् पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्था इदानीं एवं मन्यसे इत्यर्थबोधकम् "आ एवं नु मन्यसे" इति वाक्यम् । स्मरणम्-स्मरण-द्योतक आकारः । "आ एवं नु मन्यसे" । एतयोः द्वयोरेवार्थयोः अयमाकारः प्रगृह्यसंज्ञां लभते । अच्सन्धिः न भवति ।

**आदेशः** :- अष्टौ । रायः । युष्माभिः । युवाम् (VII-2-84) (b. VI-2-88).

**आदेशः** :- तादृक् । "आ सर्वनाम्नः" (VI-3-91) तादृशः (91) स्यात् ।

**उणादि** :- विपूर्वात् अस्यतेः विषा बुद्धिः । जहातेः विपूर्वात् आ । विहा - स्वर्गः । निपातावेतौ अव्यये इमे (476)

**आदेशः** :- सुपां सुलुक् । उभा यन्तारौ (VII-1-39).

**उणादि** :- संपूर्वात् इणः समया ।

निपूर्वात् कषः निकषा (614) अव्ययम् ।

**आदेशः** :- अप्रगृह्यस्य एचः अदूरात् हूते - पूर्वस्यार्धस्य आ । स च प्लुतः । उत्तरस्य इ, उ. भवतः । आगमः ३ पूर्वा ३ न् । ग्रामः ३ न् । अग्निभूता ३ इ । करोषि पटा ३ उ (VIII-2-107).

## आक्

**आगमः** :- चरिचलिपतिवदीनां द्वित्वं अचि ।

आक् चाभ्यासस्य – (वा) (VI-1-12) चराचरः । वदावदः । अत्र धातूनां प्रत्यये परतः द्वित्वं, अभ्यासस्य आक् आगमः । तेन हलादिः शेष इति न ।

## आकम्

**आदेशः** :- युष्माकम् । अस्माकम् "साम आकम्" (VII-1-33)

## आकिनिच्

**तद्धितः** ।- एकाकी । "एकादाकिनिच्" (V-3-52)

## आगूच

**उणादि** :- यवागूः । (361)

## आङ्

प्रादिगणपठितः निपातः । अस्य प्रगृह्य संज्ञा न भवति ङित्वात् हेतोः । अस्य चत्वारः अर्थाः । "इषदर्थे क्रियायोगे मर्यादाभिविधौ च यः" । आ + उष्णम् = ओष्णम् किञ्चिदुष्णम् । आ + एति = एति । अप्रगृह्यत्वाभावादेव सन्धिः । आकडारात्समासः । अत्र आ शब्दः मर्यादावाची । असिद्धवदत्राभात् (VI-1-22) अत्र आ शब्दः अभिविध्यर्थकः । वाधान्तमधीतम् । क्रमान्तमधीतम् इति वत् ।

# आच्

**तद्धितः** :- अपञ्चम्यन्तात् सप्तमी प्रथमान्तात् ।

दक्षिण शब्दात्, दक्षिण + आच् = दक्षिणा वसतिः उत्तरा (V-3-36; 38)

# आट्

**तिङ्** :- लोटः । "आडुत्तमस्य पिच्च" (III-4-92) करवाणि । करवै ।

**तिङ्** :- लेटः । अट् आट् आगमौ भवतः पर्यायेण । जोषिषत् तारिषत् (III-4-94).

**तिङ्** :- अजादीनां धातूनां लुङ् लृङ् लुङ्क्षु ।

लङ् - ऐक्षत, ऐहत ।

लृङ् - ऐहिष्यत, औक्षिष्यत ।

लुङ् - ऐहिष्ट, औब्जीत् (VI-4-72).

**आगमः** :- सुप् । नद्यन्तात् शब्दात् ङिति आट् । बहुश्रेयसी + ङे = बहु श्रीयसी + आ. ङे. अत्र आटश्च (VI-1-90) इति वृद्धिः । एकः पूर्वपरयोः वृद्धौ, यणादेशः । बहुश्रेयस्यै । अत्र वृद्धिरेचि (VI-1-88) इत्यनेन वृद्धिः प्राप्तैव । आटश्चेति पुनः वृद्धिविधिः । ऐक्षत इत्याद्यर्थमत्राप्युपन्यस्तः (VII-3-112).

# आटच्

**तद्धितः** :- मत्वर्थे । वाक् + आटच् - वाचाटः यो बहु भाषते ।

# आणकः

**उणादि** :– लूञ्–लवाणकम् । द्वात्रम् । धूञ्–धवाणको वातः। शिङ्घि शिङ्घाणकः श्लेष्मा कलोप : पृषोदरादित्वात् । शिङ्घाणं नासिकामलम् । धात्र् – धाणको दीनारभागः (363)

# आत्

**संज्ञा** :– "आ" द्विमात्रिकः "तपरस्तत्कालस्य" (I-1-70) वृद्धिरात् ऐच् उदाहरणम् ।

**आदेशः** :– "टाङसिङसामिनात्स्याः" (VII-1-12) ङसि स्थाने (IV-1-2).

**आदेशः** :– तिङ् । आदेच उपदेशेऽशिति । ग्लौः । ग्लावा । ग्लेयात् । (VI-1-45, 57).

**आदेशः** :– समासे समानाधिकरणे उत्तरपदे । महादेवः । महाबाहुः । जातीये उत्तरपदे महाजातीयः । अन्यत्र न । महतः पुत्रो महत्पुत्रः । अन्यत्र बहुव्रीहावपि समानाधिकरणत्वात् भवति । महान् वाहुः यस्य सः महाबाहुः । घासकरविशिष्टशब्देषु परेष्वपि (ग्रा) । महत्याघासः महाघासः । महाकरः । महाविशिष्टः । अष्टशब्दादपि हविषि परे अष्टाकपालम् (वा) गोशब्दादपि युक्तेऽर्थे अष्टागवं शकटम् (VI-3-46) द्विशब्दात्, अष्टन् शब्दात् संख्यायां परे आत् । द्वाविंशतिः । अष्टादश (VI-3-47).

**छ. आदेशः** :– विटि वनि च परतः अनुनासिकान्तस्य अङ्गस्य आत् । अब्जन् + विट् । "जनसन" (III-2-67) विट् = अब्जाः । वेरपृक्तस्य इति वलोपः (VI-4-41). विजावा वन् प्रत्यये परे उदाहरणम् काशिका । ओणृ धातोः वनिपि अवावा (VI-4-41).

**आदेशः** :– तिङ् झलादौ सनिपरे जनसनखनां तथा झलादौ क्ङिति परे तेषाम् आत् आदेशः ।

जनधातुः जुहोत्यादिषु दिवादिषु च पठितः। जजातः जातः सेट्त्वात् सनि जिजनिषति । सनि, सिषासति । सातः, सातवान् सातिः । खन, खातः । खातवान् । सेटत्वात् चिखनिषति । जज्ञति जुहोत्यादि जनधातोः जजन्+अति । अति इत्यस्य ङित्वेऽपि, झलादित्वाभावात् आत्वं न । "गमहन" इत्युपधालोपः । जज्न्+अति न कारस्य श्चुत्वे नञ् । जज्ञ्+अति = जज्ञति (VI-4-42 & 45).

**आदेशः** :– सुप् । ज्यादात् भवति । ईयसः ज्यायान् ।

**आदेशः** :– सुप् । "पथि मथिऋभुक्षामात्" (VII-1-85) पथिन्+सु = पथि आ सु नकारस्थाने अननुनासिक एव आकारः । तपरकरणात् पथ्यादेः इतोऽत् सर्वनामस्थाने । पथ+आम्+सु (VII-1-86) थो न्थः (VII-1-87) पन्थाः । मन्थाः । भस्य टेः लोपः (VII-1-88). पथः । पथा । पथिभ्याम् ।

# आताम्

**तिङ्** :– आत्मनेपदम् । प्रथमपुरुय द्विवचनम् (III-4-78)

# आति

**तद्धितः** :– अपर इत्यस्य पश्चभावः निपात्यते ।

पश्च+आति = पश्चात् । उत्तरपश्चात् । दक्षिणपश्चात् (क्र) (V-3-32).

छ. । परो व्याप्तो जायते पश्चसिह पश्चासिह (V-3-33).

**तद्धितः** :– उत्तरादागतः । दक्षिणादागतः । अपरान् वसति (V-3-34).

**तिङ्:-** आत्मनेपदप्रथमद्विवचने लट् । कुरु+आते=कुर्वाते । टित आत्मनेपदानां टेरे (III-4-79) अदन्तात् अङ्गात् इय् । "आतो ङितः"। एधेते (VII-2-81).

# आतु

**उणादि :-** जीवातुः । अस्त्रियां भक्ते जीविते जीवनौषधे (79).

# आत्वान्

**संज्ञा :-** आ इति धर्मः आत्वम् । आत्वं यस्य शब्दस्यास्ति स आत्वान् । आत्व विशिष्टः पाक इत्यादि तस्यान्त उदात्तो भवति । आत्वान् शब्दविरोधः (VI-1-159).

# आथाम्

**तिङ् :-** आत्मनेपदि मध्यमपुरुषद्विवचनम् । तिप्तस्झि (III-4-78).

# आसे

**तिङ् :-** आमनेपदि मध्यमपुरुष एकवचन तिप्तस्झि (III-4-78 ) "टित आत्मनेपदानां टेरे" (III-4-79).

# आन

सामान्यतः कातच् शानच् ग्रहणम् (III-4-98).

# आनक

**उणादि :-** शयानको अजगरः । भयानकः (362)

# आनङ्.

आदेशः :- समासः । मातापितरौ "आनङृतो (VI-3-25).

# आनच्

उणादि :- संस्तवानो वाग्मी (246)

# आनि

तिङ् :- मेनिः (III-4-89). भवानि । आनिलोट् (VIII-4-16) प्रभवाणि ।

# आनुक्

उणादि :- कृशेरानुक् । कृशानुः (442)

# आप्

स्त्रीप्रत्ययाः :- टाप् (IV-1-4) डाप् (IV-1-13) चाप् (IV-1-74) इत्येषां सामान्यनिर्देशः प्रायेण सर्वत्र दृश्यते ।

1. ङ्याप् प्रातिपदिकात् (IV-1-1).
2. हल्ङ्याप्भ्यो (VI-1-68).
3. ङ्यापोः संज्ञा (VI-3-63).
4. प्रत्ययस्थात्कात्पूर्व (VII-3-44).
5. आङि चापः (VII-3-105, 106).

6. ङे.राम् (VII-3-116, 117).

7. आपोऽन्यतरस्याम् (VII-4-15).

इत्यादिषु आप् इति त्रयाणां सामान्येन निर्देशः ।

N.B. :– आप् प्रत्ययानां लुक् । अव्ययादाप्सुपः (II-4-82).

# आप्

**संज्ञा** :– "अनाप्यकः" (VII-2-112) अत्र आबिति प्रत्याहारेण "स्वौजसमौट्" (IV-1-2) सूत्रे तृतीयैकवचनात् प्रभृति सुप् इत्ययंप्रकारेण।

# आपुक्

**आगमः** :– तिङ्. ।"सत्यापपाश"(III-1-25) सूत्रे अर्थवेदसत्यानामापुक् वा । अर्थापयति । वेदापयति । सत्यापयति । णिच् अपि । णिजयं तत्करोति तदाचष्टे इत्यर्थकः । सत्यापयति । सत्यं करोति सत्यमाचष्टे (वा) । नामधातुः ।

# आपुट्

**आगमः** :– "सत्यापपाश" (III-1-25). भाष्योक्तः ।

# आम्

**कृत्** :– "कास्प्रत्ययादाम्" (III-1-35 & 42) कास् धातोः कासाञ्चक्रे । प्रत्ययान्तात् लोलूयाञ्चकार ।

द्रव्यप्रकर्षे – किंतमाम् । पूर्वाह्णेतराम् । पचतितराम् । उच्चैस्तराम् । किमेत्यादिपदान्तात् घात् (V-4-11) घप्रत्ययात् आम् स्यात् ।

**आदेशः** :– तिङ् । "आमेतः" (III-4-90) एधेताम् ।

**आगमः** :– सुप् । चतुरनडुहोरामुदात्तः (VII-1-98) चत्वारः । अनड्वान् ।

**सुप्** :– षष्ठीबहुवचनम् (IV-1-2).

# आमिनिच्

**तद्धितः** :– मत्वर्थे । "स्वामिन्" (V-2-126).

# आमु

**तद्धितः** :– द्रव्यप्रकर्षे । पचतितराम् (V-4-11).

# आय्

**सन्धिः** :– "एचोऽयवायावः" (VI-1-78).

# आयः

**आगमः** :– तिङ् । "गुपूधूप" (III-1-28) आय् इत्यस्य गोपायति । आर्धधातुके विकल्पः । गोपायिता – गोप्ता (III-1-31).

# आय्य

"अयामन्ता" (VI-4-55) आय्यपरे णेरयादेशः । गृहयाय्यः ।

**उणादि** :– मित्र इव दिधिषाय्यः । दधाते र्द्वित्वमित्वं षुक् च । श्रवाय्यः यज्ञपशुः । दक्षाय्यः गरुडः । स्पृहयाय्यः (377–376).

# आर

(VI-3-33) छन्दसि । सुपां सुलुक् (VII-1-39) आकारादेशः उत्तरपदे । पितरा - मातरा । "ऋतोङि सर्वनामस्थानयोः" (VII-3-110) इतिगुणः ।

# आरक्

**तद्धितः** :– गौधारः । गोधेरः । गौधेयः । अपत्यार्थे (IV-1-130).

# आरकन्

**तद्धितः मत्वर्थीयः** :– शृङ्गारकः । वृन्दारक । "शृङ्ग-वृन्दाभ्यामारकन्" (वा) (V-2-122).

# आरन्

**उणादि** :– अङ्गारः । मन्दारः (414).

# आरिः

**तद्धितः** :– परारिः इत्यत्र पूर्वशब्दस्य पर इति निपातः । पर + अरिः = परारिः । पूर्वतरस्मिन् संवत्सरे अभिधेये (V 3-22).

# आरु

**कृत्** :– वन्दारुः । "शृवंद्यो" (III-2-173).

# आल्

**छ. आदेशः** :– वसन्ता यजेत । वसन्ते इति प्राप्ते सुपां सुलुक् (VII-1-39).

# आलः

**उणादि** :– मव्य – बन्धने इत्यस्मात् आल प्रत्ययः। अपतुट् आगमः। धातोः यलोपः। अन्त्यवकारस्य मत्वम्। ममापतालः विषये (728).

# आलच्

**तद्धितः** :– वाचालः। मतुबर्थे (V-2-124).

**उणादि** :– तिष्ठ – स्थालम् – स्थाली (113),

## आलञ्

**उणादि** :– पात – पातालम्। चडि – चण्डालः। (114)

प्रज्ञादित्वात् अणि चाण्डालः (114).

# आलीयच्

**उणादि** :– मार्जालीयः बिडालः (113).

# आलुच्

**तद्धितः** ।– शीतालुः। शीतोष्ण तृप्रेभ्यः तन्नसहत इत्यर्थे। उष्णालुः उष्णं न सहते। तृप्रालुः। बहुलं छन्दसि (V-2-22) सूत्रे वार्तिकं काशिकायां व्याख्यातम्।

**कृत्** :– निद्रालुः। स्पृहिगृहि (III-2-158).

# आवः

**आदेशः** :– युवां वा।

# आवद्

**तद्धितः** :- (VII-2-92). समावत् वसति (V-4-30).

# आसः

**उणादि** :- यौतेरासः । यवासो दुरालभा (442).

# आसिः

**उणादि** :- इण आसिः । अयाः वह्निः (661).

## आहञ्

**तद्धितः** :- औत्तराहः (IV-2-104).

# आहि

**तद्धितः** :- दक्षिणाहि । आहि च दूरे (V-3-37).

——(o)——

# इ

इकार इत् । तत्फलम् । "इदितो नुम्धातोः" (VII-1-58) विदि - वन्दिति ।

# इः

कृत् :- पश्य । किः उपसर्गे (III-3-92)

## इञ्

तद्धितः :- चातुरर्थिकः । सौतङ्गमिः (IV-2-80).

# इत्

**तद्धितः समासान्तः** :- बहुव्रीहिः । गन्धशब्दस्य इत् । उत्शब्दात् - उद्गन्धिः उद्गतो गन्धो यस्य इत्यर्थे । पूति - पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । (V-4-135).

**तद्धितः समासान्तः** :- अल्पार्थे सूपगन्धि भोजनम् (V-4-136) सूपोऽल्पो यस्मिन् भोजने । एवमेव घृतगन्धि ।

**तद्धितः** :- स्थाघ्वोरिच्च (I-2-17) उपास्थित । अदित ।

**तद्धितः समासान्तः** :- उपमानार्थे । पद्मगन्धिः पद्मस्य गन्ध इव गन्धोऽस्य (V-4-137).

**आदेशः कृत्** :- तकारादिकित्प्रत्यये परतः द्यत्यादीनाम् इत् आगमः । द्यति - निर्दितः । निर्दितवान् । स्यति - अवसितः । अवसितवान् ।

मा – मित:, मितवान् । स्था – स्थित:, स्थितवान् (VII-4-40) (शो) निशितवान्, निशातवान् । अवच्छात: (VII-4-40). संशितो ब्रह्मण: व्रते (वा) ।

**उणादि** :– अच इ: अजन्त धातो: रु + इ = रवि: । एवं पवि: । तरि: । कवि: । अरि: । अलि: (578) खनि: । असि: (579) भुजे: किच्च । भुजि: (581).

**आदेशः** :– "एचोऽप्रगृह्यस्य" (VIII-2-107) अगम: ३ पूर्वा ३ न् । अग्नि भूता ३ इ ।

**उणादि** :– "कुडिकम्प्योर्नलोपश्च" (583) कुडि दाहे । कुडि: देह: । कपि: ।

शास इदङ् हलो: (VI-4-34). शिष्ट: ।

**आदेशः** :– तिङ् । "भृञामित्" (VI-4-76) श्लौपरे अभ्यासे । भृञ् – बिभर्ति । माङ्–मिमीते । ओहाङ् – जिहीते । "अर्तिपिपर्त्योश्च" (VII-4-77) श्लौ· इयर्ति धूमम् । पिपर्ति सोमम् । छन्दसि बहुलम् (VII-4-78).

**आदेशः** :– सनि परत: अकारान्ताभ्यासस्य इत् भवति । पिपृच्छिषति । जिगमिषति (VII-4-79).

**उणादि** :– "कुशेरुम्भोमेदेता:" – कुसित: (546).

**उणादि** :– "ओ: पुयण्ज्यपरे" (VII-4-80). उवर्णान्ताभ्यासस्य इत् अपरक पवर्ग यवरलजपरे । पिपविषति । जु सौत्रौ धातु: । जिजावयिषति ।

"एचोऽप्रगृह्यस्य" (VIII-2-107).

**ऋत इत् धातो:** (VII-1-100, 101) किरति । कीर्तयति ।

**आदेशः** :– प्रत्ययस्थात् ( VII-3-44 to 48 ). कारिका। एषिका।

स्रवति। सिस्रावयिषति। सुस्रावयिषति। शृणोति। शिश्रावयिषति। शुश्रावयिषति एषु धातुषु इत् अभ्यासस्य (व) (VII-4-81).

**आदेशः** – "मयते रित्" (VI-4-70).

**आदेशः** :– तिङ्। सनि, दम्भेरचः (VII-4-50).

**आदेशः** :– तिङ्। "इत् दरिद्रस्य" (VI-4-114 & 117).

# इक्

**प्रत्यय** :– धातुनिर्देशे। इक्श्तिपौ धातुनिर्देशे (वा) "रोगाख्य" ( III-3-108 ). भिदिः। पचतिः। कृष्यादिभ्यः (वा)। कृष्यादि धातुभ्यः इकेव भवति न श्तिप्। कृषिः। किरिः इत्यादि।

**प्रत्याहारः** :– "इको यणचि" (VI-1-77) "इग्यणस्सम्प्रसारणम्" (I-1-8) इत्यादयः।

**आदेशः** :– "ठस्येकः" (VII-3-50) ठक्, ठञ्, ञिठ्, पश्य (IV-2-20) (वा).

**आदेशः** :– इकक्, इकन्, विकन् इत्यादि। पश्य।

**कृत्** :– आखनिकः। इको वक्तव्यः "खनो घ च" ( III-3-125).

# इकक्

**तद्धितः** :– "ऋतूक्थादि" (IV-2-60). (वा)।

# इकर्

**तद्धितः** :– एकागारिकः चोरः (V-1-113) काशिका।

# इकन्

**तद्धितः :–** सू. (IV-2-60). इकन् पदोत्तरपदात् (वा)।

**उणादिः :–** क्रिय इकन्। क्रयिकः क्रेता। आपणिकः। आखनिकः (202, 203).

# इकवक

**कृत् :–** आखनिकवकः। "खनो घ च" (III-3-125).

# इच्

**प्रत्याहारः :–** "इजादेश्च" (III-1-36, (IV-1-4) इत्यादि।

**उणादि :–** समासः। केशाकेशि। "कर्मव्यति" (V-4-127, 128).

# इजि

**उणादि :–** पणे = वणिक् (228).

"वशेः कित्"। उशिक् अग्निः (229).

## इञ्

**कृत् :–** परिप्रश्ने आख्याने च। कां त्वं कारिमकार्षीः। सर्वां कारिमकार्षम्। वि भाषा (III-4-110) ण्वुलपि।

**कृत् :–** इणजादिभ्यश्च (वा)। "रोगा" (III-3-108) धातु-निर्देशे – आजिः आतिः, इत्यदायः काशिका पाठः। कौमुदीपाठस्तु इञ् वपादिभ्यः (वा) वापिः। वासिः।

**तद्धितः :–** अपत्यार्थे। दाक्षिः। प्लाक्षिः। अपत्यार्थे (IV-1-95, 97)

**तद्धितः** :– अपत्यार्थे । उदीचां मते सेनान्तलक्षणकारिभ्यः इञ् भवति । सेनान्तात् प्रातिपदिकात् – कारिषेणिः । लक्षण शब्दात् – लाक्षणिः । कारिवाचिभ्यः कौम्भकारिः । तान्तुवायिः (IV-1-153).

# इट्

**तिङ्.** :– आत्मनेपदि उत्तमैकवचनम् ( III-4-78 ).

**आगमः** :– वलादेरार्धधातुकस्येट् (VII-2-35). ( तिङ्. कृत् ) ऊदृदन्तेतिकारिकागतधातुवर्जः ।

**तद्धितः आगमः** :– वत्यन्तात् संख्यावाचिनः प्रातिपदिकात् आर्हीयेष्वर्थेषु कन् भवति । तस्य कनः इडागमो वा भवति । तावता क्रीतः - तावत्कः, तावतिकः । यावता क्रीतः –यावतिकः । "वते रिड्वा" (V-1-23).

# इण्

**कृत्** :– धात्वर्थनिर्देशे इणजादिभ्यः । आजिः " रोगाख्या " (III-3-108) (वा) अयं कौमुदीपाठः । काशिका कौमुद्योः वार्तिकभेदः ।

**प्रत्याहारः** :– "इणः षः" (VIII-3-39) "इण्कोः" (VIII-3-57,58).

**उणादि** :– जनिघसिभ्यामिण् । जनिः । घासिः (569) अन्येभ्योऽपि आगमविशेषाश्च "वातेः डिच्च" । विः पक्षी । वीः स्त्रियाम् (573).

समानशब्दे उपपदे "ख्या" इत्यस्मात् इण् । स च डित् । यलोपश्च । समानं ख्यायते जनैरिति सखा (576) आङि, श्रिहनिभ्यामाङो ह्रस्वः । अश्रिः । अहिः (577).

# इत्

**तद्धितः** :– आदेशः। इदमःस्थाने रेफादौ थकारादौ च प्रत्यये एत इत् इति क्रमात् भवतः। इदम्+थम्=इदम् स्थाने इत्+थ=इत्थम् (V-3-4) "इदमस्थमुवः" (V-3-24) इति प्रकारवचने।

**आदेशः** :– "एचोऽप्रगृह्यस्य" (VIII-2-107) वाऽयइत्।

# इतच्

**तद्धितः** :– तदस्य सञ्जातम् (V-2-36). तारकितम्।

**उणादि** :– फलेरितच् आदेश्च पः। पलितः (712).

# इतन्

**उणादि** :– "हृश्याभ्याम् इतन्"। हरितश्येतौ। रोहितः मत्स्यः। लोहितः। "पिशेः किच्च"। पिशितम् मांसम् (373, 374. 375).

# इति

**उणादि** :– "हृसृरुहि" इतिः। हरित् वर्णः। सरित् नदी। रोहित् मृगविशेषस्य स्त्री। ऋश्यस्य रोहित् पुरुषस्य योषित्। (97) "ताडेः णिलुक्च"। तडित् (98).

# इत्नुच्

**उणादि** – अयामन्त (VI-4-55) इति णेः अयादेशः। स्तनयित्नुः। गदयित्नुः। मदयित्नुः। पोषयित्नुः (309).

# इत्र

**कृत्** :- करणे । "अर्ति" (III-2-184) अरित्रम् । खनित्रम् । चरित्रम् ।

"पुवः संज्ञायाम्" (III-2_185) पवतेः करणे । पवित्रम् । समुदायेन संज्ञा । दर्भः पवित्रम् । कर्तरि - देवतावाचकात् । अग्निः पवित्रं स मा पुनातु सोमः पवित्रम् । करणे ऋषिवाचकात् - पूयते आतनोति पवित्रम् ऋषिः (III-2-186). वेदमन्त्रः ।

स्वरे इत्र प्रत्ययान्त उदात्तो भवति । प्रलवित्रम् । प्रसवित्रम् । (VI-2-144).

**उणादि** :- अशित्रादिभ्यः । धरित्री (612).

# इत्वन्

**उणादिः** :- जनित्वौ मातापितरौ (544).

# इथिन्

**उणादि** :- अतेरिथिन् अतिथिः (442).

# इथुक्

**आगमः** :- संख्यावाचिनः वत्वन्तस्य प्रातिपदिकस्य पूरणार्थे डटि (V-2-48). परतः । यावतां पूरणो यावतिथः । तावतां पूरणः तावतिथः । "वतोरिथुक्" (V-2-53),

# इन्

"इनहन्पूषार्यम्णां शौ" (III-4-12) इत्यत्र इनिरेव । अत इनिठनाविति (V-2-115) न तु इन् ।

**कृत्** :– कर्मण्युपपदे एव । स्तबकरिः । शकृत्करिः । दृतिहरिः । "फलेग्रहिः" छ. ब्रह्मवनिं त्वा क्षत्रवनिम् । (III-2-26 & 27).

**उणादि** :– पचिरग्निः । तुडि तुण्डि वलि सर्वधातुभ्यः इन् (557).

**सुप्** :– "टाङसिङसामिनात्स्याः" (VI-1-12). अजन्ततृतीयैक-वचनम् । रामेण ।

# इनङ्.

**आदेशः** :– तद्धित कल्याणादिभ्योऽपत्यार्थे ढक् । तत्सन्नियोगेन इनङ् । काल्याणिनेयः । सौभागिनेयः ।

# इनच्

**उणादि** :– "श्यात्स्या हृयविभ्यः इनच्" । श्येनः । स्त्येनः । हरिणः ( 204).

**तद्धितः** :– नासिकाया नते अभिधेये नि शब्दात् इनच् । "नि" इत्यस्य चिक इत्यादेशः । चिकिनः । अन्यः चिपिटः इत्यपि (V-2-33).

# इनण्

**उणादि** :– "महेरिनण् च" । माहिनम् – राज्यम् । चकारात् इनन् च । महिनम् (214).

# इनन्

**उणादि** :– द्रुदक्षिभ्याम् । द्रविणम् । दक्षिणम् । अन्ये आदेशाः । इरिणम् – शून्यम् । विपिनम् रोहिणम् (208, 209, 210, 211, 212, 213).

# इनिः

**उणादि** :– गमेरिनिः । गमिष्यतीति गमी (446)

**कृत्** :– कुत्सायां सोमविक्रयी (III-2-93).

**कृत्** :– प्रपूर्वात् जवतेः । प्रजवी । प्रजविनौ जिजयी । (III-2-156, 157).

**तद्धितः** :– परिवृढो रथः इत्यर्थे पाण्डुकम्बली पाण्डुकम्बल शब्दादेवेति नियमः (IV-2-11).

**तद्धितः** :– समूहार्थे । खलानां समूहः । खलिनी (IV-2-51).

तदधीते इत्यर्थे अनुब्राह्मणाख्यग्रन्थमधीते । अनुब्राह्मणी (IV-2-62).

**तद्धितः** :– प्रेक्षादिभ्यः । प्रेक्षी (IV-2-39).

**तद्धितः** :– तेन प्रोक्तमित्यर्थे भिक्षुनटसूत्रयोरेव । कमन्देन प्रोक्तं भिक्षुसूत्रमधीयते इति कमन्दिनो भिक्षवः । कृशाश्वेन निर्मितनटसूत्र मधीयते इति कृशाश्विनः (IV-3-111) नटाः ।

**तद्धितः** :– संसृष्टे अर्थे चूर्ण शब्दात् चूर्णेन संसृष्टा चूर्णिना अपूपाः (II-4-23) लवणाल्लुक् (IV-4-24) लवणेन संसृटः सूपः लवणः सूपः ।

**तद्धितः** :– श्राद्धमनेन भुक्तमित्यर्थे – श्राद्धी । ठन्नपि – श्राद्धिकः (V-2-85).

**तद्धितः** :– "पूर्वमनेन" इत्यर्थे पूर्वशब्दात् पूर्वो गतं कृतं वा पूर्वमनेन पूर्वी (V-2-86 & 91).

**तद्धितः** :– मत्वर्थे । तपोस्यास्तीति तपस्वी । सहस्रमस्यास्तीति साहस्री । अणपि (V-2-102, 103).

**तद्धितः** :- मत्वर्थे अदन्तात् 1. दण्डोऽस्यास्तीति दण्डी (V-2-115)

2. व्रीहयोऽस्या अस्मिन् वा सन्तीति व्रीही (V-2-116).

3. तुन्दादिभ्यश्च तुन्दी, इलच्च । तुन्दिलः (V-2-117)..

"इन्हन्पूषार्यम्णां शौ" (VI-4-12) इत्यत्र इन् इनिरेव । बहुदण्डी इति । दीर्घः ।

**तद्धितः** :- तदस्य तदस्मिन्वा अस्तीत्यर्थः । 1. द्वन्द्वात्-कटकश्च वलयञ्च कटकवलयम् तदस्या अस्तीति कटकवलयिनी शङ्खनूपुरिणी ।

2. उपतापात् कुष्टी । किलासी ।

3. गर्ह्यम् । ककुदावर्ती - ककुदि आवर्तो यस्य सः । बलीवर्दः (V-2-128).

वातकी । कुक् आगमः । अनन्तरम् इनिः (V-2-129).

**तद्धितः** :- अर्थात् तदभावे इनिः अर्थी इदम् । (V-2-133).

वार्तिकं बहुलं (IV-2-122) सूत्रे कथितम् ।

**तद्धितः** :- दशवाच्यः पुष्करिणी, पद्मिनी, यस्यां सरसि सन्ति पद्मानि सा (V-2-135).

**तद्धितः** :- संज्ञायां प्रथमिनी । दामिनी । होमोऽअस्या होमिनी (V-2-137).

**तद्धितः** :- पूर्वैः कृतमित्यर्थे पूर्वैः कृतः पन्थाः इत्यर्थे पूर्विणः (V-4-133)

# इनुण्

**कृत्** :- गुणक्रिययोः कात्स्न्र्येन संबंधः । तस्मिन् द्योत्ये कूट + इनु ण् कूटिन्. सं + कूटिन् । कुगति (II-2-18). समासे संकूटिन् । इनुणन्तात् अण् (V-4-15) अत्र "नस्तद्धित" इति टिलोपे । संकूट + अण् इति प्राप्ते,

इनणि अनपत्ये इति प्रकृति भाव:। न टिलोप:। तद्धितेऽष्वचामादे: इति आदिवृद्धि:। सांराविण: (III-3-44).

# इफः

रादिफ: । रेफ: (वा) (III-3-108).

# इम्

**आगमः** :– तिङ्. । तृणह इम् (VII-3-92) तृणेढि ।

# इमन्

**तद्धितः** :– पृथ्वादिभ्यो भावे (V-1-122) अन्येऽपि त्व अण् अस्मिन् परे तु इष्ठेमेयस्सु (VI-4-164) इति टिलोप: । र ऋतो (VI-4-161) इति उ: = रेफ: । प्रथिमा । म्रदिमा ।

# इमनिच्

**उणादि** :– हरिमा काल: । सरिमा वायु: (587)

# इमनिन्

**उणादि** :– जनिमा । मरिमा । वेमा ( 588, 589 ).

# इमप्

**तद्धितः** :– "ड्वितः क्त्रिः" क्त्रेर्मम् नित्यम् (III-3-88) इति सूत्रे काशिकायां भावप्रत्यया इति वार्तिकम् । तेन पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् ।

# इय

तद्धितः :– चत् आदेशः (VII-1-2) घनिलौ च (V-3-79) देवियः छः।

# इयङ्.

आदेशः :– "अचि श्नुधातुभ्रुवां" (VI-4-77, 80).

# इया

आदेशः :– सुपां सुलुक् (VII-1-39) सूत्रे (वा) इयाडि। तत्र उर्वियापरिधानम्।

# इरच्

तद्धितः :– मत्वर्थे "केशाद्वोऽन्यतरस्याम्" (V-2-109) सूत्रे वार्तिकम् रथिरः।

# इरन्

तद्धितः :– मत्वर्थे "केशाद्वोऽन्यतरस्याम्" (V-2-109). सूत्रे वार्तिकम् मेधिरः। रथिरः।

# इरेच्

आदेशः :– तिङ्। आत्मनेपदि चक्रिरे। लिट्। लिट स्तझयो- रेशिरेच् (III-4-81).

# इल

तद्धितः :– चातुरर्थिकः। काशादिभ्यः (IV-2-79). काशिलः।
अस्य लुक् (IV-2-80).

# इलच्

**तद्धितः :-** नीतौ अनुकम्पायाम् । बह्वचो मनुष्यजाति ।

1, नाम्नः । देविलः । घञपि । देवियः (V-3-79 & 80).

2. फेनात् (V-2-99). फेनिलः । चात् मतुप् । फेनवान् ।

3. पिच्छिलो दृशेः (V-2-100) पिच्छवान् ।

4. सिकतिलः (V-2-105) देशे लुबिलचौ च ।

5. तुन्दादिभ्यः । तुन्दिलः (V-2-117).

**उणादि :-** सलति गच्छति निम्नमिति सलिलम् (54) ।

# इलु

**तद्धितः :-** हिमं न संहते – हिमेलुः । छन्दसि बहुलम् (V-2-122) (वा) काशिका । भण्डिलो दूतः । कल्याणञ्च (54)

# इश्

**आदेशः :-** इदम इश् ।

# इष्ठच्

**उणादि :-** अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः (442)

# इष्ठुच्

**उणादि :-** वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् । (442)

# इष्ठन्

**तद्धितः** :- अतिशयेन इष्ठन् । पटिष्ठः (V-3-56)

"अजादी" (V-3-58) पटिष्ठः । "तुश्छन्दसि" (V-3-59) करिष्ठः ।

# इष्णु

**कृत्** :-"अयामन्ताल्व"(VI-4-55) इष्णु परे णेरयादेशः । पारयिष्णुः ।

# इष्णुच्

**कृत्** :- अलङ्कृरिष्णुः (III-2-136) ताच्छील्ये णेः छन्दसि वीरुधः पारयिष्णवः (III-2-137) तच्छीलादिषु कर्तृषु वर्तमाने भविष्णुः (III-3-138)·

**उणादि** :- गेष्णुः गायनः । देष्णुः दाता । (296)

# इष्यै

**कृत्** :- तुमर्थे । प्रयै रोहिष्यै अव्यथिष्यै (III-4-10).

# इस्

**आदेशः** :- अभ्यासस्य सनि (VII-4-54) मित्सति ।

**आदेशः** :- सर्पिष्कः "इसुसुक्तान्तात्कः" (VII-3-51).

# इसन्

**उणादि** :- अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् (442),

# इसि

**उणादि** :– अर्चिः ज्वाला । अर्चयः इदन्तः । शोचिः । हविः । सर्पिः (265),

# इसिन्

**उणादि** :– द्युतेरिसिन् अदेश्च जः । ज्योतिः (267)..

# इस्नुच्

**कृत्** :– (III-2-77).

—o—

# ई

ईत्। फलम्। श्वीदितो निष्ठायाम् (VII-2-14) इट् निषेधः लगी । लग्नः ।

**आदेशः** :- तिङ् । श्नाविकरणान्तधातूनां अभ्यस्तानां घुवर्जितानामातः ईत् स्यात् हलादौ सार्वधातुके क्ङिति परतः । लुनीतः । अभ्यस्तानां मिमीते (VI-6-113).

# ईत्

**संज्ञा** :- "ईदूदेत् द्विवचनं प्रगृह्यम्" (I-I-11) संज्ञि ईत् ।

**आदेशः** :- समासः । ईदग्नेः सोमवरुणयोः (VI-3-27) अग्नीषोमौ । अग्नीवरुणौ ।

**आदेशः** :- तिङ् । घ्रा, ध्मा धात्वोरातः ईत् स्यात् यङि । जेघ्रीयते । देध्मीयते । (VII-4-31).

आप्ज्ञप्यृधामीत् सनिपरे । ईप्सति । ज्ञीप्सति (VII-4-55).

**आदेशः** :- एत ईद्बहुवचने (VIII-2-81).

**संज्ञा** :- "प्रगृह्यम् । ईदूतौ च सप्तम्यर्थे" (I-1-19) संज्ञी ईत् ।

**आदेशः** :- अकारान्तस्य च्विपरे ई स्यात् । शुक्लीभवति (VII-4-32).

**आदेशः** :- क्यचि परे । तथा पुत्रीभवति (VII-4-33)

**स्त्री प्रत्ययः** :- ङीप्, ङीष्, ङीन् एषां सामान्यसंज्ञा (IV-1-13, 1V-1-15, IV-1-40 & 65 ).

**तद्धितः** :– स्वाम्यर्थे स्त्री । सुमङ्गली (V-2-109).

**आदेशः** :– कृत् । आस । उत्तरस्य आनस्य । आसीनः (VII-2-82)

**आदेशः** :– समासः । द्वीपम् । अन्तरीपम् । "द्व्यन्तरुपसर्गे" (VI-3-97).

छ. "ई च द्विवचने" (VII-1-77) अक्षी । अक्षिणी इति लोके रूपम् ।

**छ. ईकारः । आदेशः** । "सुपां सुलुक्" (VII-1-39),

ईकारः । दृतिं न शुष्कं सरसी शयानम् । सरसि शयानमिति प्राप्ते ।

**उणादि** :– अवीः रजस्वला नारी । तरीः नौः । "यापोः कित् द्वे च"। ययीः अश्वः । पपीः सोमसूर्यौ । लक्ष्मे र्मुट् च – लक्ष्मीः । वातप्रमीः । वातशब्दे उपपदे माधातो रीत् । स च कित् । वातप्रमीः । स्त्रीपुंसयोः (438, 439, 440, 441).

**आदेशः** :– तिङ्· आकारान्तधातोः यतिपरे । दा + यम् = देयम् । यकि । देदीयते । जेगीयते (VI-4-65, 66).

# ईकक्

**तद्धितः** :– तदस्य प्रहरणमित्यर्थे । शक्ति प्रहरणमस्य शाक्तीकः । याष्टीकः । "शक्तिः" (IV-4-59) प्राग्दीव्यतीयेष्वर्थेषु "ईकक् च" इति वार्तिकम् । वाहीकः । अत्र ईक–ईकको भेदः । स्वरे विशेषः । वार्तिकद्वयम् "दित्यदित्यादित्य" (IV-1-85) सूत्रे काशिकायाम् ।

**तद्धितः** :– इवार्थे । कर्कः शुक्लोऽश्वः । स इव कार्कीकः । लोहित इव लौहितीकः स्फटिकः (V-3-110).

## ईकञ्

**तद्धितः** :- प्राग्दीव्यतीयेष्वर्थेषु । "दित्य" (IV-1-85) (वा) वाहीकः

## ईकन्

**उणादि** :- कषीका । अन्ये चादेशाः (456 & 465)

**तद्धितः** :- आहीयेष्वर्थेषु खारीप्रतिपदिकात् अध्यर्थखारीकम् द्विखारीकम् ।

**तद्धितः** :- सम्भवति, अवहरति, इत्याद्यर्थेषु खारी शब्दात् खारीकम् । क्रीतम् (V-1-52)

## ईचिः

**उणादि** :- मरीचिः । कणीचिः पल्लवः (510).

## ईट्

**आदेशः** :- तिङ् । अब्रवीत् । " ब्रुव ईट्" (VII-3-93, VII-3-98).

## ईत्

**आगमः** :- ईद्रथिनः (वा) रथीतरः । "नात् घस्य" (VIII-2-17)

"ईद्यति" दा + यत् - दी + यत् = देयम् (VI-4-65).

**आदेशः** :-"घुमास्थागापाजहातिसां हलि" (VI-4-66) दीयते । गीयते

## ईद

**उणादि** :- कुस् श्लेषणे । कुसीदः अन्ये च (546)

# ईमसच्

**तद्धितः** :– मलीमसः "जोत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वल-गोमिन्मलिनमलीमसाः" (V-2-114).

# ईय

**तद्धितः** :– आदेशः । "वृद्धात् छः" (IV-2-114). इति विहितस्य छस्य ईय इत्यादेशः । "आयनेयी" (VII-1-2) काकतालं + छ – काकतालीयः ।

# ईयङ्.

**तिङ्** :– सनाद्यन्तप्रत्ययः । ऋतीयते (III-1-29) "ऋतेरीयङ्." ।

# ईयसुन्

**तद्धितः** :– "द्विवचन" (V-3-57 & 64) पटीयान् । "द्विदचन-विभज्योपदे तरबीयासुनौ" । "युवाल्पयोः कनन्यतरस्याम्" ।

# ईरच्

**तद्धितः** :– मत्वर्थे । अण्ड + ईरच् आण्डीरः । (V-2-111) "काण्डाण्डादीरन्नीरचौ"

**उणादि** :– "हिसेरीरन्नीरचौ" । हिंसीरः । व्याघ्रदुष्टयोः स्वरे भेदः (696).

# ईरन्

**तद्धितः** :– मत्वर्थे । काण्ड + ईरन् = काण्डीरः (V-2-111).

**उणादि** :– करीरः वंशाङ्कुरः। शरीरम् (470) वशेः कित् - उशीरम् (471) कशेर्मुट् (472) कश्मीरो देशः। कृञ उच्च - कुरीरम् मैथुनम् (473) घसेः किच्च - क्षीरम् (474) गभीरगम्भीरौ निपात्येते (475).

# ईश्

**तद्धितः** :– "इदम्" इत्यस्य ईश् आदेशः। दृक्दृश्वतुषु परेषु। ईदृशः। ईदृक्षः। "इदं किमोरीश्की" (VI-3-90).

# ईषन्

**उणादि** :– अबि शब्दे धातौ इत्वात् नुमि, ईषनि, अरुडागमः। अम्बरीषम्। अम्बरीषः। भ्राष्ट्रो ना (469).

—o—

# उ

**उ.** उत् फलम् । उदित् प्रत्ययभिन्नः सवर्णग्राहकः "स्तोःश्चुना श्चुः" (VIII-4-40 & 44)

1. कुचुटुतुपु एते उदितः "अणुदित्सवर्णस्यचाप्रत्ययः" (1-1-69)

2. उदितो वा (VII-2-56) उदितो धातोर्वेट्, शम्-शमित्वा, शान्त्वा।

उपधाफलम् धातोरुदुपधात्, भावे आदिकर्मणि चार्थे प्रयुज्यमानः यः सेट् निष्ठा प्रत्ययः वा कित् न भवति (I-2-21) मुद् । द्युत् । उदुपधो धातुः सेटि निष्ठायां भावार्थे भावे द्योतितमनेन । द्युतितमनेन । मोदितमनेन । मुदितमनेन । आदि कर्मणि मोदितम्-मुदितम् । द्योतितम् । द्युतितम् ।

**स्त्री** :- उकारान्तात् प्रातिपदिकात् गुणवचनात् अनुपसर्जनात् ङीप् । पटु = पट्वी, मृद्वी (IV-1-44) " वोतो गुणवचनात् " ।

विकरणम् । तनादि कृञभ्यः उः । तनोति । करोति ( III-1-79, 80 )

**आदेशः** :- उकारान्त करोति धातोः अकारस्य इकारः ।

**आदेशः** :- "एचोऽप्रगृह्यस्य" (VIII-2-107) अगमः ३ पूर्वा ३ न् ग्रामा ३ न् । अग्निभूता ३ इ : पटा ३ उ ।

# उत्

सर्वधातुके क्ङिति । कुरुतः । कुर्वन्ति VI-4-108, 109, 110).

**आदेशः** :- एचो ऽप्रगृह्यस्य (VIII-2-107)

**कृत्** :- सनाशंसभिक्ष उः (III-2-108, 169-170 )

**आदेशः** :– "अदसोऽसेर्दादु दो मः" (VIII-2-80).

एचोऽप्रगृह्यस्य (VIII-2-107).

**आदेशः** :– उदोष्ठ्यपूर्वस्य (VII-1-102).

**आदेशः** :– उत्परस्यातः चरफलोरभ्यासात्परस्य अतः उत् । यङि । यङ्लुकि । चञ्चूर्यते । चञ्चुरीति । चञ्चूर्ति । हलि च (VIII-2-77) इति दीर्घः । तकारादौ प्रत्ययेऽपि । तादौ किति चरफलोरत उत् प्रफुल्तः (VII-4-88, 89)

इदुद्भ्याम् (VII-3-117, 118) इकार उकार वाचकः ।

# उक्

**प्रत्याहारः** :– 1. उगिदचां सर्व (VII-1-70).

2. श्र्युकः किति (VII-2-11).

उगन्तात् अङ्गात् उतरस्य ठस्य इक इत्यादेशो न किन्तु क इत्येव नैषादकर्षुकः शाबर जम्बुकः (VII-3-51).

# उण्

**उणादि** :– **प्रथमः प्रत्ययः** :– कृवापाजिमिस्वदिसाध्यशूभ्य उण् । करोतीति कारुः, शिल्पी कारकश्च । वातीति वायुः । आतो युक् । पातीति पायुः गुदस्थानम् । जयति रागान् जायुः , औषधम् । मिनोति प्रक्षिपति देहे उष्माणं मायुः पित्तम् । स्वदि आस्वादने स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः । उणादि (1).

### उकञ्

**तद्धितः** :– कर्मणे प्रभवति कार्मुकं धनुः (V-I-103).

**कृत्** :– कर्तरि–पातुकः । धातुकः । लषपत (III-2-154).

## उकन्

**उणादि** :– "समि कस उकन्" सम्यक् कसंति = पलायन्ते जना अस्मादिति संकसुकः दुर्जनः । अस्थिरचित्तश्च (187).

### उञ्

**प्रत्याहारः** :– मय उञो वो वा (VIII-3-33).

उञि च पदे (VIII-3-21).

उञः (I-1-17).

## उत्

**तद्धितः** :– पूर्वस्मिन् संवत्सरे अभिधेये पूर्वशब्दस्य परभावः । पर + उत् = परुत् (V-3-22)

## उद्

**आगमः** :– ग्रसित (VII-2-34) सूत्रे काशिका । तृचि उट् ऊट् आगमौ निपात्येते । तृ = तरुतारम् । वृ–वरुतारम् ।

**आदेशः** :– उदकस्य उदादेशः (VI-3-57 & 60).

## उडच्

**उणादि** :– गिर उडच् । गरुडः (595).

# उण्

**प्रत्यया** :– पश्य कृत् ।

# उत्र

**उणादि** :– त्रैङ् आदिभ्यः । त्रोत्रं प्रहरम् । वरुत्रं वस्त्रम् (612).

# उन्

**उणादि** :– शके-शकुन (329)

# उनेन्

**उणादि** :– कृवृदारिभ्यः । करुणो बृक्षभेदः । करुणा कृपा । वरुणः दारुणम् (333).

# उनसि

**उणादि** :– दमेरुनसिः । सप्तार्चिः, दमुनाः (674)

# उनि

**उणादि** :– शकुनिः । ((329)

# उन्त

**उणादि** :– शकुन्तः । (329),

# उन्ति

**उणादि** :– शकुन्तिः । (329)

# उभ

**उणादि** :- कुसेरुम्भ, उम ईद इत । ऐते । कुसुमम् (546)

# उम्भ

**उणादि** :- कुसुम्भम् । (546)

# उम्

**आगमः** :- तिङ् । "वच उम् (VII-4-20) अवोचम् ।

# उरच्

**तद्धितः** :- मत्वर्थे । दन्त उन्नत उरच् । दन्तुरः (V-2-106).

# उरन्

**उणादि** :- चतेरुरन् । चत्वारः (736).

# उरिन्

**उणादि** :- जसुरिः वज्रं । सहुरिरादित्यः (331)

# उलच्

**उणादि** :- हृषेः । हर्षुलो मृगकामिनोः । चटतेरपि बाहुलाकात् । चटुलं शोभनम् (96),

**उणादि** :- वृञ्–वरणे । लुठ = विलोडने । तनु विस्तरे । तड = आघाते । इत्यादेश एव । तण्डुल । एव (687) अपूर्वा रुपसिद्धि । सर्वत्र तण्डल इसेव ।

## उलिः

**उणादि** :– अङ्गेरुलिः । अङ्गुलिः (442).

## उवङ्.

**आदेशः** :– अचिश्नुधातु भ्रुवां (VI-4-77 & 80)

## उषच्

**आदेशः** :– पृनहिकलिभ्यः । परुषम् । नहुषः । कलुषम् (515)

## उषासा

**आदेशः** :– उषासोषसः (VI-3-31).

## उस्

**आदेशः** :– "परस्मैपदानां णलतुसु" (III-4-82).

**आदेशः** :– "इसुसुक्तान्तात् कः" (VII-3-51).

**आदेशः** :– तिङ् । जुस् । पश्य (III-4-108).

## उसिः

**उणादि** :– जनेः । जनुः जननम् (272).

——(o)——

# ऊ

ऊदित् फलम् । ऊदितां धातूनां इडागमः विकल्पेन । स्वरति सूति सूयतिधूञूदितां (वा) (VII-2-44). गाहू–विगाढा । विगाहिता । गोपू-गोप्ता । गोपिता ।

**उणादि** :– चमूः । तनूः । धनूः शस्त्रम् (81)

# ऊक्

अभ्यासस्य "ऊ" इत्यागमः । पटधातोः पटूपटः । घञर्थे कः ।

इदूदे (I-1-11,) ईदूतौ च (I-1-19) ऊदनोः (VI-3-98) ऊदुपधाया (VI-4-89 to 91).

**कृत्** :– जागरूकः (III-2-165 ) यायजूकः (III-2-166).

**उणादि** :– मृ–मरूकः मृगः (479) वलेरूकः । वलूकः पक्षी (480)

**उणादि**:– उलूकादयश्च । वावदूकः वक्ता (481).

# ऊङ्.

ऊङ् च गमादीनां (वा) । "गमः क्वौ" (VI-4-40) अग्रेगूः ।

**स्त्री प्रत्ययः** – ऊङुतः (IV-1-66 to IV-1-72).

ब्रह्मबन्धूः । कुरूः । रम्भोरूः ।

# ऊकण्

**उणादि** :– शालूकम् । मण्डूकः (482),

**उणादि** :– कणेः । काणूकः काकः (479).

## ऊख

**उणादि** :– माङ उखो मय् च–मयूख: (703).

## ऊट्

**आगमः** :– तरूतारम् (VII-2-34).

## ऊठः

**आदेशः** :– वाह् ऊठ् (VI-4-132) वाह् इत्येवमन्तस्य सम्प्रसारणम्। प्रष्ठौहा । अत्र "एत्येधत्यूठ्सु" इति वृद्धिः । (VI-1-89)

**आदेशः** :– वकारस्य स्थाने ऊठ् इत्यादेश: । सिव्धातोरौणादिके न प्रत्यये लघूपधगुणात् पूर्वमेव ऊठ् । स्योनम् । अक्षद्यू: । हिरण्यद्यू: । (VI-4-19).

ज्वर = जू: । त्वर – तू: ( VI-4-20 ).

## ऊत्

ऊदुपधाया गोह: (VI-4-89). निगूहति ( VI-4-90) दूषयति ।

## ऊतिः

**उणादि** :– मृ – मरुत् । गृ – गरुत् (94).

## ऊथन्

**उणादि** :– जरूथम् – मांसम् । वरूथो रथगुप्तौ ना (163).

## ऊम

**उणादि** :– गुधेरूम: । गोधूम: (680).

## ऊर:

**उणादि** :– खर्जूर: । खर्जेरूर: (530).

## ऊरन्

**उणादि** :– मीनातेरूरन् । मयूर: । स्यन्दे: सम्प्रसारणम् । सिन्दूरम् (67 & 68 ).

**उणादि** :– मसेरूरन् । मसूर: । पञ्चमपादीयोऽयं (681) मसी परिणामे इत्यस्मात् "मसत्यको मसूरोऽध मकुष्टक मयुष्टकौ" इत्यमर: ।

**उणादि** :– असेरूरन् । असुर: । अयं प्रथमपादीय उरन् प्रत्यय:, अत्रापि मसेश्च इति सूत्रितम् । तेन मसुर: पञ्चमपादीय: ऊरन् लक्ष्यते । मसूर: (42, 43).

## ऊलच्

**तद्धित:** :– बल इत्यस्मात् न सहते इयर्थे बलल: । "बहुलं छन्दसि" (V-2-122) सूत्रे वातं न सहते इति वार्तिकमिदम् । वातं न सहते वातूलम् काशिकायां व्याख्यातम् ।

**उणादि** :– पिञ्जूलम् कुशवर्ति: (530).

## ऊषन्

**उणादि** :– ऋ = अरूष: सूर्य: । हनूष: राक्षस: (513).

**उणादि** :– पीय इति सौत्रो धातु: । पीयूषम् (516).

**उणादि** :– मस्जे: नुम्च । मञ्जूषा (517) गडेश्च गण्डूष: । गण्डूषा (318).

—o—

## ऋ

ऋदित् फलम् । ऋदितां धातूनां णौ चङि उपधाया न दीर्घः । बाधृ अवबाधम् । अययाचत् । अडुढौकत् (VII-4-2).

**उणादि :–** दिवेर्ऋः । देवरः (256).

## ऋत्

**आदेशः :–** उर्ऋत् (VII-4-7, 8) णौ चङि उपधाया ऋवर्णस्था ऋः स्यात् । ऋकारस्य स्थाने पुनः विकल्पेन ऋकारविधिः विशेषफलदः अपीपृधत् (VII-4-78). अवीवृतत् । अववर्तत् । छ. नित्यम् । अवीवृध पुरोडाशेन (VII-4--8).

## ऋतिन्

**उणादि :–** शकेः । शकृत् (498).

सुञ्यसेर्ऋन् सौ परे । असुक्षेपणे इत्यस्मात् ऋन् । स्वसा. (253)

## ॠ

ॠकारः स्थानी तत्र इत् आदेशः । कॄ. किरति (VII-1-100)

## ऌ

——(०)——

# ए

एदित् – फलम् । इडादौ सिचि परस्मैपदे एदितां धातूनां वृद्धिः न । रगे – अरगीत् । कखे – अकखीत् (VII-2-5).

# एन्

संज्ञा :– ईदूदेत् (I-1-11).

आदेशः :– बहुवचने झल्येत् (VII-3-103 to 106).

तिङ् :– टित आत्मनेपदानां टे रे (III-4-79) एधते ।

तिङ् :– आदेशः लिङि । यादौ लिङि घुमास्थादिधातूनां एत्वमादेशः । देयात् । धेयात् (VI-4-67, 68, 69).

आदेशः :– एतेतौ रथोः । एतर्हि (V-4-3).

आदेशः :– घ्वसोरेद्धौ (VI-4-119 to 126). देहि । धेहि ।

# एण्यः

तद्धितः –: प्रावृषेण्यः – वलाहकः शैषिक (IV-3-17),

# एद्यवि

तद्धितः :– परशब्दात् अहनि अभिधेये । परेद्यवि । परस्मिन् अहनि इत्यर्थः । (V-3-22).

# एद्युसच्

**तद्धितः** :– पूर्व, पर, अन्य इत्यादिभ्यः अहन्यभिधेये । पूर्वेद्यु : ।परेद्युः पूर्वस्मिन्नहनि । परस्मिन्नहनि ।

# एधा

**तद्धितः** :– संख्याप्रातिपदिकेभ्यः विधार्थे वर्तमानेभ्यः धा प्रत्ययो भवति । द्वित्र्योः –संवधिनो धाप्रत्ययस्यैधाजादेशो भवति अन्यतरस्याम्। द्वेधा, द्वेधम्, द्विधा । त्रेधा, त्रेधम्, त्रिधा (V-3-42 & 46)

# एन

**आदेशः** :– द्वितीया, टा, ओस् इत्येतेषु परेषु इदमेतदोरन्वादेशविषये 'एन' इत्यादेशो भवति । सोऽप्यनुदात्तः । इदम् । इमं छात्रं छन्दोऽध्यापय । अथो एनं व्याकरणमपि । एतत् । अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम् (II-4-34).

# एनप्

**आदेशः** :– दक्षिणेनाग्निं दर्भान् संस्तीर्य । अदूरे इत्यर्थे एनपा द्वितीया इति (II-3-31) द्वितीया (V-3-35).

# एरच्

**उणादि** :– पतेरः पक्षी । कठेरः कृच्छ्रजीवी । गडेरः मेघः (58).

# एलिम

**कृत्** :– तव्यत्तव्यानीयरः (III-1-96) सूत्रे (वा) केलिमर उपसंख्यानम् । पचेलिमा माषाः ।

# एलिमच्

पचेलिमो वह्निरव्योः (477).

# एलुः

छ. हिमं न सहते हिमेलुः । विभाषा (V-2-122). सूत्रे वार्तिकं काशिकायाम् ।

# एश्

तिङ् :- लिटस्तझयोरेशिरेच् । चक्रे (III-4-81) अनेकाल्त्वात् सर्वादेशः (I-1-55).

कृत् :- कृत्यार्थे छन्दसि अवपूर्वात् चक्षिङ् धातोः एश् आदेशो भवति । नावचक्षे । नावख्यातव्यमित्यर्थः (III-4-15).

——(o)——

# ऐ

तिङ् :– एत ऐ (III-4-93) लोट्, आत्मने. एधै ।

आत ऐ .(III-4-95) लेट् मन्त्रयैते ।

# ऐच्

प्रत्याहारः :– 1. वृद्धिरादैच् (I-1-1).

2. न य्वाभ्यां ऐच् (VII-3-3).

इत्यस्य ह्रस्वादेशः इगिति रै. अतिरे ।

एच इग् ह्रस्वादेशे (I-1-48).

आदेशः :– मनुशब्दस्य उकारस्य ऐ औ । मनायी (IV-1-38).

# ऐरक्

तद्धितः :– अपत्यार्थे चटकाया अपत्यं पुमान् चाटकैरः (IV-1-128).

# ऐस्

सुप् :– अतो भिस ऐस् (VII-1-9 to 11). रामैः ।

—o—

# ओ

ओदित् फलम् । ओदितश्च (VIII-2-45). ओदितो धातोः निष्ठा तकारस्य नकारः । ओलस्जी लग्नः । स्वादयः ओदितः । षूङ् – सूनः । दूङ् – दूनः ।

# ओत्

**संज्ञा :–** ओत् (I-1-15). निपातः । ओदन्तो निपातः प्रगृह्यसंज्ञः आहोइति । उताहो इति ।

# ओक

निपातः । उच धातोः के प्रत्यये परे । दिवौकसः, जलौकसः (VII-3-64).

# ओतच्

**उणादि :–** कबेरोतच् पश्च । कपोतः (62).

# ओरन्

**उणादि :–** कठोरः । चकोरः (64).

# ओस्

**सुप् :–** षष्ठी द्विवचनम् । रामयोः (IV-1-2).

**सुप् :–** सप्तमी द्विवचनम् । रामयोः (IV-1-2).

—o—

# औ

**तिङ्** :— आत औ णलः (VII-1-34). बभौ ।

**सुप्** :— अदस औ सुलोपश्च (VII-2-107) असौ ।

**आदेशः** :— मनु इत्यस्य उकारस्य ऐ औ इत्यादेशौ स्त्रियाम् । मनायी । मनावी (IV-1-38).

# औत्

**आदेशः** :— इदुद्भ्यमुत्तरस्य ङे रौकारादेशः । नेयं नदी संज्ञा, नापि घि संज्ञम् । सख्यौ । पत्यौ (VII-3-118).

**सन्धि** :— औतो अम् शसोः (VI-1-93). गां पश्य । द्यां पश्य ।

**सुप्** :— स्वौजसमौट् (IV-1-2). प्रथमा द्वितीया द्विवचनम् ।

# औङ्.

**सुप्** :— औङः आप (VII-1-18, 19). इत्यत्र स्वौजस् एव ।

# औट्

**सुप्** :— द्वितीया द्विवचनप्रत्यय एव टित् करणं सुट् अनपुंसकस्येति (I-1-43), सर्वनामस्थान संज्ञाकारणोपयुक्त प्रत्याहारार्थम् (IV-1-2).

# औत्

**आदेशः** :— दिव औत् । द्यौः (VII-1-84).

# औश्

**आदेशः** :— अष्टाभ्य औश् । अष्टौ (VII-1-21)

वृद्धिः । औपगवः ।

**आगमः** :— न य्वाभ्यां पदान्ताभ्यां (III-3-3) दौवारिकः ।

—o—

# क

कित् फलम् । क्ङिति च (I-1-5) गित् – कित् – ङित्

1. निमित्ते गुणवृद्धी नस्तः। कित् कृतः – कृतवान् । चितः – चितवान् ।

2. असयोगाल्लिट् कित् (I-2-5) असंयोगान्ताद्धातोः परो अपित् लिट् कित् स्यात् । चिच्छिदतुः । ईजतुः । गुणनिषेधः ।

3. लशक्वतद्धिते (I-3-8) प्रत्ययाद्या लकार शकार कवर्गाद्या इतो भवन्ति तद्धितप्रत्ययं वर्जयित्वा। भुक्तः । भुक्तवान् ।

4. वचि स्वपि यजादीनां किति (VI-1-15) एतेषां किति परतः सम्प्रसारणम् उक्तम् । सुप्तम् । इष्टम् ।

5. सृजि-दृशोः झलि अम् अकिति । स्रष्टा । द्रष्टा (VI-1-58).

6. च्छवोः शूडनुनासिके (VI-4-19 to 21) शब्दप्राट् । पृष्टः ।

7. अनिदितां हल उपधायाः क्ङिति (VI-4-24) किति प्रत्यये परतः एतेषां नकारलोपः । स्रस्तः । ध्वस्तः ।

8: अनुनासिकान्तस्य अङ्गस्य उपधाया दीघः क्वि प्रत्यये परतः झलादौ क्ङिति प्रत्यये च परतः (VI-4-15) क्वौ परतः प्रशान्। झलादौ किति , शान्तः, शान्तिः ।

9. अनुनासिकलोपः ।"अनुदात्तोपदेश" (VI-4-37) यत्वा । रत्वा ।

10. "जनसन" इत्यादीनां आत् स्यात् किति । ज्ञातः । खातः (VI-4-42).

11. दीङो युट् अचि क्ङिति (VI-4-63) उपाददीये ।

12. अतो लोपः इटि च । पपिथ (VI-4-64).

13. गमहनजन (VI-4-98 to 100) अगमत् । अनुनासिकलोपः किति ।

14. किति च (VII-2-118) तद्धितेषु किति वृद्धिः, । नडादिभ्यः फक् कित्वेऽपि वृद्धिः । नाडायनः ।

15. कितः (VI-1-165) तद्धित् कित् प्रत्ययः । अन्तोदात्तः । फक् । नाडायनः नडादिभ्यः फक् (IV-1-99).

कृत् :– इगुपधज्ञा (III-1-35. 36). बुधः । ज्ञः । प्रीणाति इति प्रियः किरः । सुग्लः । प्रज्ञः । ज्ञा + क आतो लोपः (VI-4-64) इति आलोपः ।

कृत् :– गेहे कः (III-1-144) गृह्णातीति गृहम् । कित्वात् न गुणः गृहाः दाराः । गृहे स्थिताः स्त्रियः ।

(अ) आतोऽनुपसर्गे कः (III-2-3) आकारान्तधातोः अनुपसर्गात् कर्मण्युपपदे कः । गां ददाति इति गोदः । पार्ष्णिं त्रायते, पार्ष्णि च ददाति इत्यत्र आकारलोपः – आतो लोप (VI-4-64) सुपिस्थः (III-2-4) सुबन्ते उपपदे स्था धातोः कः । समेन तिष्ठतीति समस्थः। विषमस्थः । तुन्दं परिमार्ष्टि तुन्दपरिमृज आस्ते (अलसस्तिष्ठति)

शोकमपनुदति शोकापनोदः पुत्रः (III-2-5).

प्रे दाज्ञः (III-2-6) विद्याप्रदः । पथि प्रज्ञः सीमरथः (III-2-7) सम्पूर्वात् ख्याधातोः कर्मण्युपपदे कः । गां सञ्चष्टे गोसंख्यः । अविसंख्यः । पशूनां संख्यां गणयति ।

(आ) स्थः क च (III-2-77) शंस्थः (कल्याणवान्)

**उणादि** :- स्रुवः कः । कित्वात् गुणाभावः । स्रु-स्रुवः, होमानभिजिहर्ति । पात्रविशेषः (219).

कर्कः धवलघोटकः । अर्कः । दाकः । बाहुलकात् कस्य नेत्वम् (320).

"सिचेः संज्ञायाम् हनुमौ कश्च" सिञ्चतेः कप्रत्ययः हकारादेशः नुमागमश्च । सिंहः (740).

व्याङि घ्रातेश्च जातौ । कप्रत्ययः । व्याघ्रः (741).

**तद्धितः** :- चातुरर्थिकः । वुञ्छण (IV-2-80) ऋश्यादिभ्यः कः । ऋश्यकः न्यग्रोधकः ।

**तद्धितः** :- प्रागिवात्कः (V-3-70 to) अनुक्षेपणे कन् (V-3-95). इवे प्रतिकृतौ (V-3-96) अधिकारोऽयम् । कनादयः प्रत्ययाः । तेषां क इति सामान्यनिर्देशः तत्र ।

**तद्धितः** :- अज्ञाते अर्थे । अश्वकः, यस्य स्वामी न ज्ञातः कस्याय-मश्व इत्यवस्थायाम् (V-3-73 to 87).

**तद्धितः** :- कन् । इट् निषेधः । तितुत्रत (VII-2-9).

**तद्धितः** :- कुत्सितेऽर्थे (V-3-74) कुत्सितो अश्वः अश्वकः । अव्ययात् उच्चकैः । तिङन्तादपि कुत्सितेऽर्थे कः । पचतकि ।

**तद्धितः** :- स्वार्थे अवेः कः (V-4-28) अविरेव अविकः ।

**आदेशः** :- सुप् । किमः कः (VII-2-103) सर्वनाम ।

**तद्धितः** :- इसुसुक्तान्तात्कः (VII-3-51) ठस्य इक आदेश उक्तः (VII-3-50). तस्य इकस्य कः इत्यादेश इसुसुक्तान्तात् । अत्र दोष उपसंख्यानम् इति वार्तिकम् ।

# कत्

**आदेशः** :– कु इत्यस्य तत्पुरुषे समासे एव अचि पुरे। कु + अश्वः = कदश्वः। कद्रथः। कद्वदः। कत्तृणा जातिविशेषः (VI-3-101 to 103).

# कतु

**उणादि** :– डुकृञ् इत्यस्मात् कतुः। कृ + कतुः कित्वान्न गुणाभावः क + अतुः + यण् = क्रतुः (77).

# कत्निच्

**उणादि** :– अर्तेः = अरत्निः वज्रमुष्टिकरोऽरत्निः।

# कध्यै

**कृत्** :– तुमर्थे छः। भावार्थेऽपि। इन्द्राग्नी आहुवध्यै।

# कध्यैन्

**कृत्** :– तुमर्थे छः। भावार्थेऽपि। श्रियध्यै (III-4-9) स्वरे विशेषः नकारे तु फलम् ञ्नित्यादिः नित्यम् (VI-1-197) इति अद्युदात्तत्वम्। अन्यत्र साधारणप्रत्ययस्वरः (III-1-3. 4).

# कन्

**तद्धितः** :– आपमित्यकम् कक् पश्य। स्वरे विशेषः (IV-4-21).

**तद्धितः शैषिकः** :– ज्ञात इत्यर्थे मद्र, वृजि, जनपदवाचिनौ। मद्रेषु जातः – मद्रकः। वृजिकः। धन्वयोपधात् (IV-2-121). इत्यस्मात् प्राप्तस्य वुञोऽपवादः (IV-2-131).

# कक्

**उणादि** :– सृकः उत्पलवातयोः। वृकः श्वापदकाकयोः । भूकम् छिद्रम् । शुष्कः (321) शुकः (322).

**तद्धितः** :– चातुरर्थिकः । वराह + कक् = वराहकः (IV-2-8).

**तद्धितः** :– तेन निर्वृत्तमित्यर्थे आपामित्यकं कनपि (IV-4-21). कक्-कनोः स्वरे विशेषः । कित्वे वृद्धिः ।

## कञ्

**कृत्** :– त्यदादिषु सुबन्तेषूपपदेषु दृश् धातोः अनालोचने अर्थे ( न दृष्टः इत्यर्थे ) कञ् भवति । क्विन् च (III-2-60) त्यादृश, तादृशः । यादृशः । अन्यादृशः । अस्मात् स्त्रियां ङीपेव । तादृशी (IV-1-15),

# कटच्

**तद्धितः** :– सम्, प्र, वि, उत् एते उपसर्गाः । एत एव प्रातिपदिकानि एभ्यः कटच् भवति । सम् + कटच् = मकारस्य पदान्तत्वान् हल्परकत्वात् मोऽनुस्वारः (VIII-3-23) इति अनुस्वारः । सं + कटच्, अत्र अनुस्वारस्य ययि परसवर्णः (VIII-4-58) इति सङ्कटम् । प्रकटम् । विकटम् । उत्कटम् । अवकटम् (V-2-29, 30).

# कटयच्

**तद्धितः** :– समूहार्थे । रथकट्या (IV-2-51).

# कणः

**उणादि** :– चितेः कणः कश्च । चिक्कणः (615).

**तद्धितः** :– सिन्धौ जातः सिन्धुकः । अपकरकः । शेषे भवाद्यर्थे कनेव । अन्यत्राण् वुञ् च (IV-3-32).

**तद्धितः** :– अलङ्कारे कर्णललाटात् (IV-3-65) कर्णे भवः अलङ्कारः कर्णिका । ललाटिका । प्रत्ययस्थात्कात् (VII-3-44 इति इत्वम् । अजाद्यतष्टाप् (IV-1-4) इति टाप् (IV-3-65).

**तद्धितः**: – संज्ञायाम् पिष्टकः । पिष्टप्रातिपदिकात् संज्ञायां विकारेऽर्थे (IV-3-147).

**तद्धितः** :– अर्हीयेष्वर्थेषु । ति शब्दान्तसंख्यावाची, शत् शब्दान्तसंख्यावाची, शब्दभिन्नसंख्यावाची यः शब्दः तस्मात् । पञ्चभिः क्रीतः पञ्चकः । बहुभिः क्रीतः बहुकः । अत्र बहुइत्यस्य संज्ञा बहुगणवतु डति संख्या (I-1-23) इति सूत्रम् (V-1-22).

**तद्धितः** :– वतोरिड्वा (V-1-23) वत्वन्तस्यापि संख्यावाचिनः अत्र इड् वा । तावत्कः । तावतिकः । यावत्कः । यावतिकः (V-1-23).

**तद्धितः** :– हरति, वहति, आवहति, सम्भवति, अवहरति, पचति, एतेष्वर्थेषु द्रव्यशब्दात् - द्रव्यकः (V-1-51, 52).

**तद्धितः** :– संज्ञायाम् । षष्टिका धान्यविशेषः । षष्टिषु रात्रिषु पचति । रात्रिशब्दस्य लोपः षष्टि + का (V-1-90).

**तद्धितः** :– कुशल इत्यर्थे । आकर्षकः आकर्षे । स्वर्णपरीक्षाकर्मणि कुशलः । त्सरुकः । त्सरुकर्मणि कुशलः । खड्गक्रियायाम् (V-2-64).

**तद्धितः** :– काम इत्यर्थे । देवदत्तस्य धने काम इत्यर्थे धनको देवदत्तस्य । हिरण्येच्छा इत्यर्थः (V-2-65).

**तद्धितः** :– प्रसित इत्यर्थे । स्वाङ्गेभ्यः केशेषु प्रसितः । केशप्रसाधने आसक्तः केशकः । एवं दन्तकः । ओष्ठकः (V-2-66),

**तद्धितः** :– पारिजातः सर्वैरङ्गैः पूर्ण इत्यर्थे गुणार्थकसस्यप्रातिपदिकात् कन् । सस्यकः शालिः । सर्वैः गुणैः पूर्णः सस्यकः साधुरित्यर्थः (V-2-68)

**तद्धितः** :– अंशशब्दात् हरतीत्यर्थे । अंशकः दायादः । अंशं हारी (V-2-69).

**तद्धितः** :– तन्त्रशब्दात् तन्तुवायस्य पटनिर्मापकयन्त्रात् अचिरादेव अपहृतः पटः इति वाच्ये कन् । तन्त्रकः नवीनो निर्मितः पटः (V-2-70)

**तद्धितः** :– संज्ञायाम ब्राह्मणशब्दात् । यस्मिन् देशे शस्त्रजीविनो ब्राह्मणाः निवसन्ति सः ब्राह्मणकः इति संज्ञा । निपातोऽयम् । यस्मिन् देशे अन्नं अल्पं जनबाहुल्यात् स देशो उष्णिकः अल्पान्नः । देशस्य संज्ञार्थं निपातः (V-2-71).

**तद्धितः** :– क्रियाकारिणि शीतकः अलसः । उष्णकः तीव्रकारी (V-3-72).

**तद्धितः** :– अध्यारूढशब्दे समासे उत्तरपदस्य आरूढ इत्यस्य लोपे अधि शब्दात् कनि अधिकम् इति निपातः (V-3-73).

**तद्धितः** :– अनुकामयते अनुकः । अभिकः कामुकः क्रूरो वा । दीर्घे अभीकः (V-2-74)

**तद्धितः** :– अन्विच्छति = वाञ्छति इत्यर्थे पार्श्वेन कुटिलमार्गे पार्श्वकः (V-2-75).

**तद्धितः** :– लुक् वा । द्विकं ग्रहणम् । द्वितीयकम् (V-2-77).

**तद्धितः** :– एषां जनानां ग्रामणीः इत्यर्थे । देवदत्तकाः देवदत्तो ग्रामणीरेषां जनानाम् (V-2-78).

**तद्धितः** :- करभः उष्ट्रशावकः यस्य गले अर्गला बध्यते सः शृङ्खलकः (V-2-79).

**तद्धितः** :- उत्कः । निपातः । उन्मनाः प्रवासी (V-2-80).

**तद्धितः** :- कालवाचिनः रोगात् । चातुर्थिकः ज्वरः ।

**तद्धितः** :- प्रयोजनवाचिनः परिणति बोधकः यस्य ज्वरस्य परिणतिः उष्णे सः उष्णकः । एवं शीतकः (V-2-81).

**तद्धितः** :- अस्मिन् अन्नं इत्यर्थे "यस्यां पौर्णमास्यां प्रायशः गुडा- पूपिका भक्ष्यते सा गुडापूपिका । एवं तिलापूपिका (V-2-82).

**तद्धितः** :- षष्ठशब्दात् माने गम्यमाने, अष्टम शब्दात् पश्वङ्गे गम्यमाने कन् तस्य लुक् च । षष्ठः । अष्टमः । पक्षे ञः (V-3-51) एककः । कन्लुकौः एकः (V-3-52),

**तद्धितः** :- कुत्सिते अर्थे वर्तमानात् प्रातिपादिकात् स्वार्थे कन् शूद्रकः (निन्दितः शूद्रः) (V-3-75).

**तद्धितः** :- जातिवाचकशब्दात् नीतौ अनुकम्पायां च कन् । व्याघ्रकः व्याघ्रशब्दः जातिवाचकः । अत्र कस्यचित् पुरुषस्य नाम अनुकम्पितः । व्याघ्रनामा पुरुषः (V-3-81)-

**तद्धितः** :- अजिनान्तं कस्य चिन्नाम । तद्विषये अनुकम्पायां सिंहा- जिनः कस्य चिन्नाम । उत्तरपदलोपः । सिंहकः । सिंहाजिन नामा पुरुषः अनुकम्पार्हः (V-3-82).

**तद्धितः** :- ह्रस्वे पदार्थे वर्तमानात् प्रातिपदिकात् संज्ञावाचकात् कन् । कापवादः । ह्रस्वो वंशो वंशकः । वेणुकः (V-3-87).

**तद्धितः** :- अवक्षपणे वर्तमानात् प्रातिपदिकात् व्याकरणकेन नाम त्वं गर्वितः (V-3-95).

**तद्धितः** :- इवार्थे प्रतिकृतौ विषये प्रतिमा चित्रमित्यादि वाच्ये, अश्व इवायमश्वप्रतिकृतिः अश्वकः (V-3-96).

**तद्धितः** :– इवार्थे गम्यमाने संज्ञायाम् । अश्वसदृशः अश्वकः । प्रतिकृतिः न विवक्षिता (V-3-97).

**लुक्** :– 1. संज्ञायां विहितस्य कनो मनुष्ये अभिधेये लुक् । चञ्चा तृणनिर्मितः पुरुषः । चञ्चः इव कन् = चञ्चा (V-3-98).

2. वासुदेवादीनां प्रतिकृतयः पुरा अपण्या अविक्रेया आसन् । जीविकार्थं ता विक्रीयन्ते चेत् अपण्ये वक्तव्ये कनो लुक् । वासुदेवः, शिवः, स्कन्दः इत्यादयः प्रतिमा-वाचकाः (VI-3-99).

3. देवपथादीनां प्रतिकृतयोऽपि । देवपथः । देवपथप्रतिकृतिः इत्यादि (V-3-100).

**तद्धितः** :– प्रकारवचने - स्थूलकः स्थूलेन समः । अणुकः अणुसमः । स्थूलदिभ्यः एव (V-4-3).

**तद्धितः** :– अत्यन्तगतिः निरन्तर सम्बन्धः यत्र न गम्यते क्तान्तात् । भिन्नकः मध्ये मध्ये भिन्नः (V-4-4).

**तद्धितः** :– सामिवचने निषेधः । अर्थकृतम् । सामिकृतम् । नेमकृतम् (V-4-5).

**तद्धितः** :– बृहतीशब्दात् आच्छादने वाच्ये कन् । बृहतिकः स्त्रीणां अच्छादनम् (V-4-6).

**स्वार्थे** :– यावादिभ्यः । याव एव यावकः (V-4-29).

**स्वार्थे** :– मणौ वाच्ये । लोहितो मणिः लोहितकः (V-4-30),

**स्वार्थे** :– अनित्यवर्णे । कोपेन लोहितः लोहितकः (V-4-31),

**स्वार्थे** :– लौहितादेव रक्ते अर्थे (तेन रक्तं) लोहितकः पटः (V-4-32).

**स्वार्थे** :– कालशब्दात् अनित्ये वर्णे गम्यमाने । कालकं मुखं वैलक्ष्येण लज्जयावनतं मुखम् । कालकः पटः । रक्तं रागात् (V-4-33).

**उणादि** :– इण्–एके मुख्यान्यकेवलाः । भेकः मण्डूकः । शल्कम् शकलम् । अत्कः पथिकः । मर्कः शरीरवायुः (323).

इट् निषेधः तितुत्रत (VII-2-9) शल्कः शलिता ।

**उणादि** :– क्लिशेः कन् । उपधाया इत्वम् । लस्य लोपः नामित्यागमश्च । कीनाशः यमः (734).

# कनसिः

**उणादि** :– वशेः सम्प्रसारणम् । उशना (678).

# कनिन्

**उणादि** :– यु = युवा । वृषु = वृषा । तक्षू = तक्षा (154).

# कन्यन्

**उणादि** :– हर्यतेः हिरण्यम् हिरच् (722).

# कन्युच्

**उणादि** :– क्षिपेः । क्षिपण्युःवसन्तः । भुवन्युः सूर्यः स्वामी च (331).

# कप्

**कृत्** :– "दुहः कप् घश्च" । कामदुघा धेनुः (III-2-70).

**तद्धितः समासान्तः** :– उरः प्रभृतिभ्यः कप् । व्यूढोरस्कः । अवमुक्तोपानत्कः । बहुव्रीहिः (V-4-151).

**तद्धितः समासान्तः** :– इन्नन्तात् स्त्रियाम् । बह्वो दण्डिनः शालाया-मस्यां बहुदण्डिका शाला (V-4-152)..

**तद्धितः समासान्तः** :– नदीसंज्ञकात् । बहुकुमारीको देशः (V-4-153).

**तद्धितः समासान्तः** :– यस्मात् बहुव्रीहेः समासान्तः प्रत्ययः न विहितः स शेषः तस्मात् वा । बहुवीणकं । बहुवीणाकः । बहुवीणः ।

**निषेधः** :– संज्ञायाम् । विश्वे यशः यस्य = विश्वेयशाः ।

1. विश्वे देवा अस्य विश्वदेवः स्थानम् (VII-4-155).
2. ईयस् प्रत्ययान्तात् बहुव्रीहौ कप् न । बह्वः श्रेयांसः यस्य बहुश्रेयान् । बहुश्रेयसी । प्रशस्यस्य श्रः (V-3-60) ईयसुन् (V-3-57 & V-4-156).
3. वन्दिते अर्थे यः भ्रातृशब्दः तस्मात् बहुव्रीहेः कप् न । सुभ्राता शोभनभ्रातृमान् (V-4-157).
4. छ. सुहोता सुष्ठु बर्हिषि (V-4-158).
5. बहुनाडिः कायः । तन्त्री धमनी । ग्रीवा । स्वाङ्गे एव बहुतन्त्रीका वीणा (V-4_159).
6. निष्प्रवाणिः अत्यन्तनवीनः पटः । पटः निर्गता प्रवाणी अस्य । (V-4-160) तन्त्रकः (V-2-70).

# कपन्

**उणादि** :– उषपः । दलपः । कचपः (422).

# कमुल्

**कृत्** :– छ. तुमर्थे शक्नोति धातावुपपदे । अग्निं वै देवा अपलुपं नाशक्नुवन् । अपलोप्तुमित्यर्थः । णमुल् च (III-4-12).

# कयन्

**उणादि** :- वलि - वलयम् । मलि - मलयः (539).

# करन्

**उणादि** :- शॄ = शर्करा । कस्य नेत्वम् (443) पुषः कित् । पुष्करम् (444).

# कल

**उणादि** :- तृपः तृपला लता ( 104 to 110 ) अन्ये आदेशाः कोमलम् । चपलम् ।

# कल्प - कल्पप्

**तद्धितः** :- ईषदसमाप्तौ। मृदुकल्पः (V-3-67).

# कव

**तद्धितः** :- उष्ण शब्दे उत्तरपदे कोः कव आदेशः । समासः। कवोष्णम् । मन्दोष्णम् । कदुष्णम् (VI-3-107).

**तद्धितः** :- छ· पथि शब्दे उत्तरपदे कवपथः कापथः (VI-3-108).

# कसुन्

**कृत्** :- इश्वरे तोसुन् कसुनौ (III-4-13) तुमर्थे ईश्वरः । विलिख् + कसुन् = विलिखः । क्त्वातोसुन्कसुनः (I-1-40) इति अव्ययत्वं सुलुक्च ।

कृत् :– सृपि तृदोः धात्वोः छ. तुमर्थे कसुन् । पुरा क्रूरस्य विसृपो विरप्शिन् (III-4-17).

## कसेन्

कृत् :– धातोः छ. तुमर्थे गवामिव श्रियसे (III-4-9).

## का

**आदेशः** :– पथिन्, अक्ष इत्येतयोः परयोः समासे कुशब्दस्य का इत्यादेशः । कापथः । काक्षः (VI-3-104).

**आदेशः** :– ईषदर्थे वर्तमानस्य कु इत्यस्यापि । कालवणम् । कामधुरम् । काम्लम् । कोष्णम् (VI-3-105 & 107).

**आदेशः** :– पुरुषे परे विभाषा । कापुरुषः कुपुरुषः (VI-3-106)

**आदेशः** :– पथि परे छ. । कापथः । कत्पथः । कुपथः (VI-3-108).

## काकुः

**उणादि** :– कटाकुः पक्षी । कुषाकुः अग्निः (357).

## काण्ड

**तद्धितः** :– तस्य समूह (VI-2-37) इत्यर्थे इनित्रकटचच (IV-2-51) सूत्रे (वा) पूर्वादिभ्यः = पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाण्डम् ।

## कानच्

**आदेशः** :– लिटः स्थाने आदेशः छ. । अग्निं चिक्यानः ।

सोमं सुषुवाण: । लकारस्थाने न लोका (II-3-69) इति लिट: स्थाने आदेशोऽयम् । अत: नायं कृत् । कर्तृकर्मणो: कृति (II-3-65) इति प्राप्ताया: षष्ठ्या: निषेधोऽयम् । अत एव द्वितीया लिडादेशत्वादेव अभ्यास: (III-2-106).

# काम्

**आदेश:** :– आसितव्यम् किल तूष्णीकां महाभाष्यम् । "अकच्" इवायमादेश: (V-3-72) सूत्रे भाष्यम् । अत्र मित्वादन्त्यादच: पर इति ।

# कामम्

**आदेश:** :– विकल्पार्थककामचार इत्यर्थे काममतिदिश्यतां वा. महाभाष्यम् । (I-1-57).

# काम्यच्

**तिङ्** :– सुप आत्मन:क्यच् । काम्यच्च (III-1-8, 9) पुत्रकाम्यति आत्मन: पुत्रमिच्छति इत्यर्थे ।

# कालन्

**उणादि** :– तमि–तमाल: । विशि–विशाल: (115)

**उणादि** :– प्रीयु: सौत्र: प्रियालु: वृक्षभेद: (356).

# कि

**कृत्** :– उपसर्गे उपपदे घुसंज्ञकधातो: कि: कर्तृभिन्ने कारके भावे संज्ञायाञ्च । विधि: । निधि: (III-3-92). "उपसर्गे घो: कि:" ।

# कि:

**कृत्** :– अधिकरणे । जलधि: । शरधि: । घो: कि: (III-3-93).

# किः - किन्

**कृत्** :- ताच्छील्याद्यर्थेषु आकारान्त ऋकारान्तधातुभ्यः "गमहनजन" इत्येतेभ्यश्च छन्दसि कि - किनौ भवतः । तौ लिड्वत् । लिट्कार्यं प्रवर्तत इति कार्यातिदेशः । पपिः सोमम् । ददिर्गाः । जघ्निर्वृत्रम् (III-2-171).

# कितच्

**उणादि** :- रुचि - रुचितम् । वचि - उचितम् । कुचि - कुचितम् परिमितम् (625).

# किन्दच्

**उणादि** :- कुणिन्दः शब्दः । पुलिन्दः जातिविशेषः । कुपिन्दः कुविन्दः तन्तुवायः ( 525, 526 ).

# किरच्

**उणादि** :- इषि - इषिरः अग्निः । मदि - मदिरा सुरा । चदि - चन्दिरः चन्द्रः हस्ती च (51) अशेर्णित् । आशिरः वह्निरक्षसोः (52).

# किष्यन्

**उणादि** :- रुचिष्यम् इष्टम् । भुजिष्या दासी (618).

# की

**आदेशः** :- किमः स्थाने दृक् दृश् वतुषु परेषु । कीदृक् । कीदृशः । कियान् । अत्र वतुप् विधानं किमिदम्भ्यां (V-2-40) इति सूत्रेण (VI-3-90).

# कीकन्

**उणादि** :- ऋजेः । ऋजीकः इन्द्रः । धूमः (729).

# कीटन्

**उणादि** :– कॄ = किरीटम् । तिरीटं सुवर्णम् (624).

# कु

**आदेशः** :– कु इति कवर्गादेशः संज्ञारूपः । चजोः कु घिण्यतोः (VII-3-52 & VII-2-67).

**आदेशः** :– क्विन् प्रत्ययान्तस्य धातोः सर्वत्र कः कवर्गादेशः । स्पृशोऽनुदके क्विन् (III-2-58) घृतस्पृक् (VIII-2-62).

**आदेशः** :– कु तिहोः (VII-2-104) कुत्र । कुह ।

# कुक्

**आदेशः** :– ङ्णोः कुक्टुक् शरि (VIII-3-28) प्राङ् शेते ।

**आगमः** :– नडादीनां (IV-2-91) चातुरर्थिकः । छप्रत्ययस्यागमः । नडकीयम् । उत्करः (IV-2-90) इति छविधिः ।

**आगमः** :– वातातिसाराभ्याम् (V-2-129). इति प्राप्तस्य मत्वर्थे इनिप्रत्ययस्य सन्नियोगशिष्टः । वातरोगो अस्य इति वातकी । अतिसारकी ।

**उणादि** :– हीकुः । ह्रीकुः लज्जावान् (365).

# कुटारच्

**तद्धितः** :– अवकुटारम् (V-2-30).

# कुणप्

**तद्धितः** :– पाकर्थे पील्वादिभ्यः । पीलुपाकः इत्यर्थे पीलुकुणः । कर्कन्धुकुणः (V-2-24).

# कुरच्

**कृत्** :– भिदुरम् (III-2-162)..

# कुषन्

**उणादि** :– पुर – अग्रगमने । पुरुष: । अन्येभ्योपि इति पूरुष: (514)

# कू:

**उणादि** :– नृति शृध्योः । नृतू – नर्तक: । शृधू: अपानम् (91).

## कृञ्

धातूनां संग्रहार्थे संज्ञा । "कृञ्चानुप्रयुज्यते लिटि" (III-1-40) इत्यत्र "कृभुअस्ति" एषां धातूनां सङ्ग्रहः । अत्र कृभ्वस्ति योगे (V-4-50) इति कृशब्दादारभ्य कृञो द्वितीयतृ (V-4-58) इति ञकारः । एवं कृञ् इति प्रत्याहार: धातुत्रयसङ्ग्राहक: ।

# कृत्

प्रत्ययविशेष: तिङ्भिन्न: कृत् धातो: (III-1-91) इत्यधिकारे आतृतीयाध्यायसमाप्ति । अस्मिन्नधिकारे ये प्रत्यया: तिङ्भिन्ना उपदिष्टा ते सर्वे कृत् संज्ञका: । धातोरेकाचो हलादे: (III-1-22) इत्यारभ्यापि आतृतीयायाध्यसमाप्ति धात्वधिकारोऽस्ति । कृत्प्रत्ययसंज्ञार्थं तथा उपपदसंज्ञार्थमेव द्वितीयधात्वधिकारस्य आरम्भ: । एतेन सूत्रे (III-1-1) आरभ्य सूत्रे (III-1-90) पर्यन्तं कृत्प्रत्यया नैव सन्तीत्यर्थः । धातो: साक्षात् विहिता एते कृतः बहुष्वर्थेषु अपादान सम्प्रदान करणाधिकरणादिषु कारकेषु प्रयुज्यन्ते । कर्तरि कृत् (III-4-67) इति सामान्यो निर्देश: । यत्र साक्षादर्थनिर्देशो नास्ति तत्रेदमुपतिष्ठते ।

# कृत्याः

कृत्या: प्राङ् ण्वुल: (III-1-95) इत्यारभ्य ण्वुल्तृचौ (III-1-133) इति सूत्रपर्यन्तं ये प्रत्यया विहिता: तव्यत् तव्य इत्यादय: ते कृत्यप्रत्यया: ।

# कृत्वसुच्

तद्धितः :– क्रियाया अभ्यावृत्तिगणनेऽर्थे संख्यावाचकशब्दात् पञ्चकृत्वो भुङ्ते । दिवा पञ्चवारं भुङ्क्ते इत्यर्थः (IV-4-17).

बहुधाशब्दात् अविप्रकृष्टकाले आसन्नकाले इति वाच्ये वा । बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते (V-4-20)

# केन्

कृत् :– छ· कृत्यार्थे केन् अन्ये च । नावगाहे । नावगाहितव्यम् (III-4-14).

# केन्य

कृत् :– छ· । दिदृक्षेण्यः कृत्यार्थे (III-4-14).

# केलिमर

कृत् :– कृत्यप्रत्यः । तव्यत्तव्यानीयरः (III-1-96). इति सूत्रे केलिमर् इति (वा) पचेलिमा माषाः ।

# कै

कृत् :– तुमर्थे छ. । प्रयै प्रयातुम् । सहिष्यै सोढुम् । अव्यधिष्यै अव्यथयितुम् । प्रयै रोहिष्यै अव्यथिष्यै (III-4-10).

# कोलच्

उणादि :– कपोलः । गण्डोलः । पटोलः (66).

# क्तः

**उणादि** :- अक्तम् । घृतम् । सितम् (369).

**उणादि** :- सूरतः । दान्तः । उपशान्तः (692).

**कृत्** :- झलादौ किति ङिति च छः । तस्य । प्रच्छ् - पृष्टः । पृष्टवान् । वकारस्य द्यूतः । द्यूतवान् (VI-4-19) कर्तरि ।

**कृत्** :- क्तक्तवतू निष्ठा संज्ञा (I-1-26) निष्ठा (III-2-102) भूते काले (III-2-84) भुक्तः । भुक्तवान् । अत्र वासरूपविधिर्नास्ति ।

**कृत्** :- आशिषि लिङर्थे लोडर्थे च । देवा एनं देयासुः इत्यर्थे देवदत्तः । अस्मिन्नर्थे क्तिच् अपि भवति । क्तिच् क्तौ च संज्ञायाम् (III-3-174).

**कृत्** :- "नपुंसके भावे क्तः (III-3-114) हसितम् । जल्पितम् ।

**कृत्** :- लट् इत्यर्थे मति बुद्धि पूजा (III-2-188) राज्ञां पूजितः, राजभिः पूज्यमानः ।

**कृत्** :- ञितः धातोः लडर्थे क्तः । अन्येभ्यः धातुभ्यस्तु निष्ठार्थकः । ञिमिदा - मिन्नः । ञिक्ष्विदा - क्ष्विन्नः । ञिधृषा - धृष्टः (III-2-187).

**कृत्** :- कर्मणि सकर्मकधातोः । कृतः कटस्तेन । भावे अकर्मकात् धातोः । शयितं भवता (III-4-70).

निष्ठावत् क्तिन् । ॠकारल्वादिभ्यः (वा) ल्वादिभ्यः (VIII-2-44) शीर्णिः । लूनिः ।

**कृत्** :- आदिकर्मणि निष्ठा वक्तव्या (वा) ।

निष्ठा (III-2-102) सूत्रे, कर्तरि क्तः (III-4-71)

आदि कर्मणि यः क्तः स त्रिष्वपिः । कर्तरि - देवदत्त कटं प्रकृतः

कर्मणि - देवदत्तेन कटः प्रकृतः

भावे - प्रकृतं देवदत्तेन ।

गत्यर्थादिभ्योऽपि त्रिषु (III-4-72).

(1) गत्यर्थकधातुभ्यः (2) अकर्मकधातुभ्यः

(3) श्लिषादिभ्यश्च कर्तरि क्तः । यथासम्भवं भावकर्मणोः ।

1. गत्यर्थकधातुः – गङ्गां गतः प्राप्तः । तेन गता प्राप्ता वा गङ्गा । तेन गतं प्राप्तं वा ।

2. अकर्मकः– सः ग्लानो आसितो वा । तेन ग्लानं आसितम् ।

3. श्लिष् – आश्लिष्टः कन्यां सः । तेनाश्लिष्टा कन्या ।

4. आश्लिष्टः तेन । शीङ् सोपसर्गः । सकर्मकः । अधिशयितः विष्णुः शेषम् । शेषेऽधिशयितः । अधिशयितं विष्णुना (III-2-72)

1. अधिकरणेऽर्थे 2. ध्रौव्य – गति – प्रत्यवसानेष्वर्थेभ्यः धातुभ्यः कर्तरि, कर्मणि, भावे च क्तः ।

(1) अधिकरणे । अधिकरणवाचिनश्च (II-3-68) षष्ठी । मुकुन्दस्यासितमिदम् । आसितम् आसनम् । आस्यते अस्मिन् । इदं यातं रमापतेः । यातं यायते गम्यते अस्मिन् । यातम् मार्ग इति यावत् । भुक्तमेतदनन्तस्य । भुज्यते अस्मिन् भुक्तम् । भोजनस्थानम् ।

(2) ध्रौव्याद्यर्थेभ्यः धातुभ्यः :–

(1) ध्रौव्यं स्थित्यर्थः । आसितो देवदत्तः । आसितं तेन । अस्य धातोः अकर्मकत्वात् न कर्मणि क्तः ।

(2) गत्यर्थेभ्यः धातुभ्यः । रमापतिः गोकुलं यातः । यातो रमापतिना गोकुलः । यातं रमापतिना ।

(3) प्रत्यवसानार्थेभ्यः । भुक्त ओदनो तेन । स भुङ्क्ते ओदनम् तेन । भावे क्तः नास्ति । "लः कर्मणि च भावे चाकर्मकेभ्यः" (III-4-69). भुक्ता ब्राह्मणा इत्यत्र भुक्तं येषां अस्तीति मत्वर्थे अच् ।

# क्तवतु

**कृत्** :– निष्ठा (I-1-26) लक्षणम् निष्ठा (I-2-102) भूतार्थवृत्तेः धातोः क्तश्च । कित् फलम् । उक् इत् । स्त्रियां ङीप् (IV-1-6) कृतवती । भुक्तवती । तयोरेव कृत्यक्तखलार्थाः (III-4-70). इति क्त प्रत्ययस्य भावकर्मणोरेवोपयोगः । क्तवतु इत्यस्य केवलं कर्तर्येव । उपधा-दीर्घः (VI-4-14).

# क्त्रः

**उणादि** :– आन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् (603).

# क्तिच्

सनः क्तिचि (VI-4-45) सातिः । सन्तिः । सतिः । सनुतात् ।

न क्तिचि दीर्घश्च (VI-4-39) अनुनासिक लोपो न । दीर्घोऽपि न । यन्तिः । रन्तिः । भवतात् इति भूतिः अशिषि ।

**कृत्** :– आशिषि संज्ञायाम् । सनुतात् सातिः । तनुतान् ततिः । क्तोऽपि (III-3-174).

# क्तिन्

निष्ठावत् क्तिन् । शीर्ष्णिः । लूनिः । ल्वादिभ्यः (VIII-2-44). निष्ठावत् धातोः स्त्रीलिङ्गे अकर्तरि कारके ।

(1) संज्ञायां तथा भावे च । मतिः । कृतिः (III-3-94)

(2) उपसर्गपूर्वकादाकारान्तधातोः भावे अङ् भवति (III-3-106). तस्यायं पुरस्तादपवादः । प्रस्थितिः । उद्गीतिः । सङ्गीतिः । संपीतिः (III-3-95).

(3) छन्दसि वृषादिभ्यः । वृष्टिः । पक्तिः । मतिः (III-3-96).

(4) क्तिन्नन्ता निपाताः । ऊति, जूति (III-3-97).

## क्त्नुः

**उणादि** :– कृत्नुः शिल्पी (310).

## क्त्निः

**उणादि** :– सूःङ । सूरिः (504).

## क्त्रिः

**कृत्** :– ड्वितः क्त्रिः (III-3-88) क्त्रेर्मम् नित्यम् (IV-4-20) कृत्रिमम् । पक्त्रिमम् ।

## क्त्वा

**कृत्** :– प्राचां मते अलं खलु शब्दाभ्यां प्रतिषेधे वाच्ये । अलंकृत्वा । खलु रुदित्वा । नवीनमतेन अलं रोदनेन । खलु करुणेन (III-4-18).

**कृत्** :– उदीच्यां मते व्यतीहारे वाच्ये । व्यतीहारः । त्वया गौः दत्ता चेत् मया महिषी दीयते । ईदृशो विनिमयः । अस्मिन् व्यवहारे समानकर्तृकत्वं नास्ति । मेङः इदन्यतरस्याम् (VI-4-70). इति मेङ् धातोः इकार अन्तादेशे अपमि + क्त्वा = अपमित्य गतिसमासः । समासे अनञ्पूर्वे (VII-1-37) "ह्रस्वस्य पिति कृति तुक्" (VI-1-71) तुक् । अपमित्य याचते । अपमाय इत्यपि (III-4-19).

**कृत्** :– परेण पूर्वस्य तथा अवरेण परस्य योगे वाच्ये । अप्राप्य नदीं पर्वतः । पर्वतादपि नदीद्वारा अतिक्रम्य पर्वतं नदी पर्वतस्य अवरयोगः (IV-4-20).

**कृत्** :– समानकर्तुकयोः धात्वर्थयोः पूर्वकाले । स्नात्वा भुक्तवा पीत्वा व्रजति (III-4-21).

## क्त्वी

**कृत्** :– छ. स्विन्नः स्नात्वी मलादिव (VII-1-48 & 49).

## क्थन्

**उणादि** :– हथो विषण्णः । नीथो नेता रथः (159).

## क्थिन्

**उणादि** :– अस्थि । सक्थि (434).

## क्नो

**उणादि** :– तृहेः क्नो हलोपश्च । तृणम् (686).

## क्नुः

**कृत्** :– त्रसि – त्रस्नुः । गृध्नुः । ताच्छील्ये (III-2-140).

## क्मरच्

**कृत्** :– ताच्छील्ये । सृमरः । घस्मरः । अद्मरः (III-2-160)

## क्मलन्

**उणादि** :– कुड्मलं । कुष्मलम् (626).

## क्यः

क्यङ् (III-I-17) क्यङ्. (III-1-18) क्यच् (III-1-19)

**कृत्** :– सामान्यनिर्देशः क्यच् (III-1-8) क्यङ्. (III-1-11) क्यङ् (III-1-16). एतेषां छन्दसि विषये (III-2-70).

# क्यङ्.

**प्र.** क्यस्य विभावा (VI-4-50) समिध्यिता । समिधिता ।

**तिङ् कृत्** :– उपमानवाचिनः कर्तुः । सुबन्तात् आचारे अर्थे वा क्यङ् । यदि कर्तृवाचकं सकारान्तं सलोपोऽपि वा भवति । श्येन इव आचरति काकः श्येनायते । अकृत्सार्वधातुकयोर्दीर्घः (VII-4-25) इति दीर्घः । पयस् इवाचरति पयस्यते । पयायते जलम् । ङित्वादात्मनेपदम् । "अनुदात्त ङित आत्मनेपदम्" (I-3-12).

(वा) (1) "आचारे अवगल्भ" क्विप् । अवगल्भते ।

(2) सर्वप्रातिपदिकेभ्यः । कृष्णतीति ।

**तिङ्** :– अभूततद्भावे च्विः (V-4-50). भृशादिशब्देभ्यः च्वि प्रत्ययाभावेऽपि अभूततद्भावविवक्षायां भुवि भवनार्थे क्यङ् । भृशादिषु यः हलन्तः तस्य हलो लोपश्च । अभृशो भृशो भवति भृशायते । अनुन्मनाः अपि उन्मना भवति उन्मनायते (III-1-12)

**तिङ्** :– चतुर्थीसमर्थात् कष्टशब्दात् क्रमणं अनार्जवे अर्थे – कष्टाय कर्मणे क्रमते । क्लिष्टे कर्मणि कुटिलतापूर्वकं प्रवृत्तो भवति कष्टायते (III-1-14) अन्यत्र कष्टमजां क्रामति ।

**तिङ्** :– रोमन्थशब्दात् कर्मणः वर्तनार्थे रोमन्थं वर्तयति रोमन्थायते (III-1-15).

**तिङ्** :– तपःशब्दात् कर्मणः चरतीत्यर्थे – तपस्यति । अत्र क्यङः ङित्वात् आत्मने पदे प्राप्ते, "न गतिहिंसार्थेभ्यः" (I-3-15) इति सूत्रे "तपसः परस्मै पदं च" (वा) (III-1-15).

**तिङ्** :– उद्वमनेऽर्थे । बाष्पमुद्वमति कूपः बाष्पायते । उष्माणमुद्वमति मनुष्यः उष्मायते (III-1-16).

# क्यच्

तिङ् :– आत्मसम्बन्धिनः सुबन्तात् कर्मणः इच्छामामर्थे क्यच् । आत्मनः पुत्रमिच्छति पुत्रीयति । "सुप आत्मनः क्यच्" (III-1-8). "क्यचि च" (VII-4-33) इति ईत्वम् । अस्मिन्नर्थे काम्यच्च (III-1-9). परस्मैपदम् ।

तिङ् :– "उपमानादाचारे" (III-1-10) आचारार्थे उपमानवाचिनः सुबन्तात् कर्मणः पुत्रमिव शिष्यमाचरति पुत्रीयति ।

# क्यप्

कृत्य :–"वदः सुपि क्यप् च" (III-1-106) वदधातोरनुपसर्गात् सुबन्ते उपपदे । ब्रह्म वद + क्यप्, क्यपः कित्वात् "वचिस्वपियजादीनां किति" (VI-1-15) सूत्रेण सम्प्रसारणम् ब्रह्म + उद + य = ब्रह्मोद्यः । अत्र चकारात् यत् प्रत्ययोऽपि ब्रह्मवद्यः (III-1-106).

कृत् :– व्रज-यज् इत्येताभ्यां स्त्रीलिङ्गे भावे क्यप् । व्रज्या । इज्या (III-3-98).

कृत्यः– भावार्थे भूधातोः सुबन्ते उपपदे अनुपसर्गे । ब्रह्मभूयं गतः ब्रह्मत्वं प्राप्तः । देवभूयं । "हनस्त च" ब्रह्महत्या । दस्यु हत्या । भावे एव । (III-1-107, 108).

कृत्य :– अन्येभ्योऽपि धतुभ्यः । स्तुत्यः । वृत्यः । खनधातोः ई च खेयम् । (III-1-109, 110, 111).

कृत्य :– भृञ् धातोः असंज्ञायाम् । भृत्यः (III-1-112 to 114),

कृत्य :– नदे वाच्ये भिदधातोः उज्झ धातोः च । भिनत्ति कूलानि भिद्यः नदः । उज्झति उत्सर्जति कूलानि – उद्ध्यः नदः (III-1-115).

कृत्य :– नक्षत्रे वाच्ये पुष्यंनि कार्याणि अस्मिन् पुष्यः । नक्षत्र विशेषः । एवं सिद्ध्यः (III-1-116).

मृञ्जः = रज्जु करणाय शोधयितव्यः तस्मिन् वाच्ये विपूय इति क्यबन्तो निपातः। विनीय इत्यपि। कल्कः शोधकद्रव्यविशेषः। तद्वाच्ये क्यबन्तो निपातः। कृष्टभूमिसमीकरणाय काष्ठविशेषो हलिः। बलेन कृष्टव्य इति। जित्य इति क्यबन्तो निपात्यन्ते (III-1-117) छंदसि प्रतिगृह्यम्। अपिगृह्यम् (III-1-118).

**कृत्य :–** ईदूदेद्विवचनं प्रगृह्यम् इत्यप्युदाहरणम्।

पदमित्यस्य अस्वैरीत्यर्थे। गृह्यकाः शुकाः। बाह्येत्यर्थे ग्राम-गृह्या सेना। ग्रामात् बहिर्भूता। पक्ष्ये इत्यर्थे वासुदेवगृह्या वासुदेवपक्ष-माश्रिता। एष्वर्थेषु क्यप् (III-1-119).

**कृत्य** :– कृत्यम् पक्षे ण्यदपि। कार्यम्। ऋहलोर्ण्यत् (III-1-124) वृष्यम्। वर्ष्यम् (III-1-120),

**कृत्** :– संज्ञायाम् (III-3-99) समजन्ति अस्मिन् इति संमज्या। सभा। क्यपि अजेः वी भावो न (वा) निषद्या आपणः। शय्या। सुत्या। सोमेज्या। षुवः क्यप् तुक्।

**·तिङ्** :– "लोहितादिडाज्भ्यः क्यष्" (III-1-13) अच्वेः। अलोहितो लोहितो भवति लोहितायते। डाच्-पटपटायते (III-1-13).

## क्युः

**उणादि** :– अर्तेः क्युरुच्च। ऋधातोः क्युः अकारस्योत्वं च। उरणो मेषः (695).

**उणादि** :– कृ किरणः। पृ = पुरणः समुद्रः (239).

## क्युन्

**उणादि** :– रञ्जेः क्युन्। कित्वात् नलोपः। रजनम्। ल्युटि तु रञ्जनम् रक्तचन्दनम् (237).

## क्रन्

**उणादि** :- सुरः । सूरः । शूरः । मीरः समुद्रः वीध्रम् ( 182, 183, 184)

## क्रिन्

**उणादि** :- अद्रिः । भूरि । (505).

**उणादि** :- जीर्यंतेः । जिव्रिः कलपक्षिणोः (727).

## क्रुः

**कृत्** :- भियः क्रुक्लुकनौ । भीरुः ताच्छील्ये (III-2-174.)

## क्रुसन्

**कृत्** :- भियः (III-2-174) इति सूत्रे वार्तिकम् । भीरुकः ।

## क्लः

**उणादि** :- मू - मूलम् । अवि अम्लः (548).

## क्लुकन्

**उणादि** :- भियः (III-2-74) भीलुकः ।

## क्वः

**तद्धितः** :- आदेशः । किमित्यस्य क्वेत्यादेशः अतिपरे (VII-2-105).

## क्वन्

**उणादि** :- अशु-अश्वः । कणि - कण्वं पापम् । खट् - खट्वा । विशि - विश्वम् (149).

# क्वनिप्

**उणादि** :– शीङ् – शीवा अजगरः। जित्वा – जेता। क्षित्वा-वायुः। सृत्वा - ब्रह्म। धृत्वा – विष्णुः (553).

**कृत्** :– भूतेः। पारं दृष्टवान् पारदृश्वा। कर्मण्युपपदे परलोकदृश्वा। राजयुध्वा। सहकृत्वा (III-2-94, 95, 96).

**कृत्** :– सुधीवा। सुपीवा। प्रातरित्वा (III-2-74, 75) पक्षेवनिप्।

# क्वरप्

**कृत्** :– इत्वरः। गत्वरः। नश्वरः (III-2-163, 164). स्त्रियां ङीप्। इत्वरी।

# क्वसु

छ. जक्षिवान्। उपसेदिवान्। उपेयिवान् (III-2-107 to 109) क्वसुरयं लिडादेशः भूतार्थवाचकः।

# क्वि

कृत् :– क्विन् क्विप् इत्यस्य साधारणो निर्देशः (III-2-134)

**समास** :– 1. नहिवृतिवृषि ( VI-3-116 ) उपानत्। नीवृत्।

2. **गमः क्वौ** (VI-4-40) अनुनासिकलोपः। गतः।

3. क्विप् परतः अनुनासिकान्तस्य दीर्घः। प्रशान् (VI-4-15).

**समास** :– छस्य – शब्दप्राट् औणादिकः (VI-4-19)

**समास** :– वकारस्य ऊठ्। अक्षद्यूः। हिरण्यद्यूः (VI-4-19).

**समास** :– छादेः धातोः उपधाया ह्रस्वः क्विब्परतः। उपच्छत् (VI-4-97). "मो राजि समः क्वौ" (VIII-3-25) सम्राट्।

# क्विन्

कृत् :– स्पृशोऽनुदके क्विन्। घृतस्पृक्। मन्त्र स्पृक्। कनावितौ। जलेन स्पृशति जलस्पृक्। अनुदके तु न। उदकस्पर्शः। अत्र नकारः क्विन् प्रत्ययस्य कुः (VIII-2-62) इति विशेषार्थे। वेरपृक्तस्येति व लोपः (VI-1-67 & III-2-58).

कृत् :– ऋत्विगादयः क्विन्नन्तनिपाताः (III-2-59).

कृत् :– त्यदादिषु अनालोचने क्विन् कञ् च। तादृक्। तादृशः (III-2-60).

उणादि :– वचि – वाक्। प्रच्छि – प्राट् (215).

शब्दप्राट्। च्छ्वोः शूडनुनासिके च (VI-4-19).

कृत् :– सर्वप्रातिपदिकेभ्यः क्विप् वक्तव्यः (वा) "कर्तुः क्यङ् सलोपश्च" (III-1-11) इति रामति।

कृत् :– सत्सूद्विष: (III-2-61) शुचिषत्।

कृत् :– सर्वधातुभ्यः सोपपदेभ्यः निरुपपदेभ्यः। वाहाद् भ्रश्यति वाहाभ्रट्। उखास्रत्। पर्णध्वत् (III-2-76) स्थः क च (III-2-77).

कृत् :– ब्रह्मभ्रूण (III-2-87) ब्रह्महा। भ्रूणहा। भूते क्विप् ब्रह्मा-दिष्वेव हन्तेरेव। कपावितौ। वेरपृक्तस्येति वलोपः (VI-1-67).

कृत् :– छन्दसि बहुलम्। मातृहा। मातृघातः (III-2-88).

कृत् :– कृञः एव। सुकृत्। पापकृत्। मन्त्रकृत् (III-2-89),

सोमसुत्।। अग्निचित्। श्येनचित् (III-2-90 to III-2-92).

भावे वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य प्रस्तुतः ध्वन्यालोकः।

कृत् :– भ्राजादिभ्यः धातुभ्यः तच्छीलादिषु कर्तरि। विभ्राट् भाः। भासौ। भासः। धूः। धुरौ। धुरः (III-2-177).

कृत् :– अन्यशब्देभ्योऽपि। युक्। छित्। भित्। (III-2-178).

कृत् :– संज्ञायाम्। विभूः – कस्यचित् नाम (III-2-179)

**कृत्** :– अन्तरे । प्रतिभूः । छ. धनिकाधमर्णयोः अन्तरे वर्तमानः (III-2-179).

## क्वुन्

**उणादि** :– रजकः । चरकः (190).

## क्सः

**तिङ्** :– शलइगुपधात् अनिटः क्सः । च्लेः । आदेशः । अधुक्षत् । अलिक्षत् (III-1-45 & 47).

**तिङ्.** :– दृशेः क्सश्च वक्तव्यः (वा) त्यदादिषु (III-2-60) इति सूत्रे । यादृक्षः । तादृक्षः । अन्यादृक्षः ।

## क्सरन्

**उणादि** :– तनुविस्तारे । तसरः सूत्रवेष्टनम् (355).

## क्सः

**उणादि** :– कुक्षि (435).

## क्सन्

**उणादि** :– अशेः अक्षि (436).

## क्सुः

**उणादि** :– इषेः । इक्षुः (437).

## क्से

**कृत्** :– छ. तुमर्थे (III-4-9).

## क्सेय्य

**उणादि** :– छ. स्तुषेय्यम् पुरुवर्चसम् (379).

—o—

## ख

इत् फलम् ।

**इत्** :- "अरुर्द्विषदजन्तस्य मुम्" (VI-3-67) अरुन्तुदः । द्विषंतपः कालिमन्या ।

**इत्** :- "खित्यनव्ययस्य" ह्रस्वः । मन्युधातोः - हरिणिंम्मन्या । अव्ययस्य तु दिवामन्या रात्रिः (VI-3-66).

**इत्** :- खिति उत्तरपदे अमागमः स्त्रींमन्यः । अम् प्रत्ययवदित्य-तिदेशेन गुण पूर्वसवर्णादियोऽपि (VI-3-68).

## खः

**तद्धितः** :- कुलात् खः (IV-1-139) अपत्यार्थे कुलीनः । महाकुलीनः । (IV-1-140 & 141).

**तद्धितः** :- अवारपार इतिशब्दात् शेषे अवारपारीणः (IV-2-93) अवारीणः । पारीणः । इति विगृहीतादपि (वा) विपरीतादपि । पारावारीणः ।

**तद्धितः** :- वर्गान्तात् प्रातिपादिकात् तत्र भवः इत्यर्थे खः । अन्ये च भवन्ति । वर्गान्तं प्रातिपादिकं शब्दादन्यच्चेत् । वासुदेववर्गीणः । अन्ये प्रत्ययाः वासुदेववर्ग्यः । वासुदेव वर्गीयः । शब्दादन्यत् किं ? कवर्गीयः । खः न भवति (IV-3-64).

**तद्धितः** :- तद्वहतीत्यर्थे सर्वधुराशब्दात् सर्वं धुरं वहति सर्व-धुरीणः (IV-4-78).

**तद्धितः** :- एकधुराशब्दात् खलोपोऽपि । एकधुरीणः । एकधुरं वहति एकधुर इत्यपि (IV-4-79).

**तद्धितः** :– मत्वर्थे ओजसीनमहः (IV-4-130) यशो भागीनः ।

**तद्धितः** :– छ· पूर्वशब्दात् तृतीयासमर्थात् कृतमित्यर्थे ख पूर्वीणैः । अन्ये प्रत्यया इनिः । पूर्विणैः । यः पूर्व्यैः (IV-3-133).

**तद्धितः** :– "हितम्" इत्यर्थे आत्मने हितम् आत्मनीनम् । भोगोत्तरपदात् - पितृभोगीणम् । विश्वजनशब्दात् - विश्वजनीनम् (V-1-9).

**तद्धितः** :– आर्हीयेष्वर्थेषु – अध्यर्द्धविंशतिकीनं, द्विविंशतिकीनम् (V-1-32).

**तद्धितः** :– सम्भवति इत्यर्थे । आढकीना। आचितीना । पात्रीणा । अवहरति इत्यर्थेऽपि । पचति इत्यर्थेऽपि (V-1-53).

**तद्धितः** :– द्विगुसमासादपि । द्व्याढकीना इत्यादि (V-1-54).

(1) समाशब्दात् द्वितीयासमर्थात् । अधीष्ट = सत्कृत्य व्यापारितः (2) भृतः (3) भूतः (4) भावी इत्येतेष्वर्थेषु खः । समीनः । समया निर्वृत्तः समीनः इत्यादि (V–1-85).

(2) द्विगुसमासादपि । दिसमीनः (V-1-86) वा ठञ् द्वैसमिकः इत्यपि ।

(3) द्विसंवत्सरीणः । द्विसांवत्सरिकः । (V-1-87).

(4) वर्षान्तात् द्विगोः तेष्वेवार्थेषु ख अपि तस्य लुगपि । द्विवर्षीणः द्विवर्षः । द्विवार्षिकः इत्यपि । व्याधिः (V-1-88).

(5) सम्पूर्वात् । संवत्सरीणः (V-1-92).

(6) परिपूर्वात् । परिवत्सरीणः (V-1-92).

**तद्धितः स्वार्थे** :– 1: अषडक्षीणः – न विद्यते षडक्षीणि । मन्त्रः ।

2. आशितं गवीनम् अरण्यम् । आशिता गावो यस्मिन्

3. अलङ्कर्मीणः - अलंकर्मणे ।

4. अलं पुरुषीणः ।

5. राजाधीनः । अध्युत्तरपदम् (V-4-7). तस्मात् तदेतदत्र । सधीनर वार्तिकम् ।

6, अञ्चेः अदिक्स्त्रियाम् । प्राक् । प्राचीनम् । अर्वाक् – अर्वाचीनम् (V-4-8).

तद्धितः :– कृत इत्यर्थे सर्वचर्मशब्दात् सर्वचर्मीणः (V-2-5).

तद्धितः :– दर्शने इत्यर्थे। दृश्यते अस्मिन्निति दर्शनः आदर्शः। यथामुखम् । सादृश्यार्थकअव्ययीभावः । यथामुखीनः । मुखं यथा वर्तते तथैव दर्शनं भवति । एवं संमुखीनः (V-2-6).

तद्धितः :– व्याप्नोतीत्यर्थे सर्वादिशब्दादिभ्यः पथ्यङ्गादिशब्देभ्यः । सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपात्रीणः (V-2-7).

तद्धितः :– प्रोप्नोतीत्यर्थे । आप्रपदीनः पटः (V-2-8 ).

तद्धितः :– बद्ध इत्यर्थे । अनुपदीना - उपानत् ।

भक्षयतीत्यर्थे । सर्वान्नं भक्षयति सर्वान्नीनः भिक्षुः ।

तद्धितः :– नेय इत्यर्थे । अयानयीनः – शारः । फलकः शिरे स्थितः (V-2-9).

तद्धितः :– अनुभवति इत्यर्थे। परान् अवरांश्च अनुभवति परोवरीणः परान् अपरांश्चानुभवति परम्परीणः (V-2-10).

तद्धितः :– गामी इत्यर्थे । अवारपारं गामी अवारपारीणः । अत्यन्तं गामी अत्यन्तीनः (V-2-11).

तद्धितः :– विजायते इत्यर्थे । समांसमीना गौः या प्रतिवर्षं प्रसूते (V-2-12).

तद्धितः :– अविष्टब्धे अर्थे । अद्य वा श्वो वा प्रसूते गौः अद्यश्वीना (V-2-13).

तद्धितः :– आगवीनः कर्मकरः (V-2-14)
अनुगवीनः गोपालकः (V-2-15).

**तद्धितः** :- अध्वानमलंगामी अध्वनीनः (V-2-16).

**तद्धितः** :- अभ्यमित्रीणः (V-2-17).

**तद्धितः**:- नवस्य नू आदेशः त्नप्, तनप्, खाश्च प्रत्ययाः । नूखः लोहितात् मणौ (V-4-30). सूत्रे वा.

**उणादि** :- शमेः खः । शङ्खः (102).

**उणादि** :- मुहेः खो मूर्च । मूर्खः (700)

**उणादि** :- नहे ह्लोपः । नखः (701)

**उणादि** :- शीङो ह्रस्वश्च शिखा (702)

# खच्

कृत् :- (1) प्रियोपपदे वदेः प्रियवदः । खकारः । मुमर्थः । चकारः । खचि ह्रस्वः (VI-4-94).

(2) वशंवदः । एवमेव (III-2-38).

(3) मितंगमो हस्ती (वा)

(4) विहायसो विह च (वा) विहङ्गमः । खच्च डित् अपि (वा) विहगः । विहङ्गमः ।
दिषन्तं तापयति द्विषन्तपः । परन्तपः (III--2-39).
वाचं यमः (III-2-40).
पुरन्दरः (III-2-41).
सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो मेघः । करीषङ्कषा वात्या (III-2_42).

मेघङ्करः । ऋतिङ्करः । भयङ्करः (III-2-43).

क्षेमङ्करः । भद्रङ्करः । प्रियङ्करः । अण् च । क्षेमकारः (III-2-44)

**कृत्** करणे । आशितो भवति ओदनं अनेनेति आशितभवः ओदनः (III-2-45).

**कृत्** :– आशितस्य भवनं आशितंभवं वर्तते (III-2-45).

**कृत्** :– संज्ञायाम् केचन । पतिंवरा कन्या । शत्रुंजयो हस्ती । युगंधर: पर्वत: (III-2-46).

सुतंगमो नाम यस्य पुत्र: स सौतंगमि: (III-2-47).

## खञ्

**तद्धित:** :– महाकुलस्य अपत्यं = महाकुलीन: (IV-1-141) आदि वृद्धि: खञि ।

जाते भवे वा । ग्रामे जात: भवो वा ग्रामीण: (VI-2-94).

शेषे यौष्माकीन: । आस्माकीन: । अन्ये च (IV-3-1, IV-3-2. IV-3-3).

तत्र जात: :– ग्रामे जात: ग्रामीण: (IV-2-94. IV-3-25).

**तद्धित:** :– साधु इत्यर्थे । ऐदंयुगीन: (IV-4-99).

**तद्धित:** :– तस्मै हितम् इत्यर्थे । माणवीनम् । चारकीणम् (V-1-11).

**तद्धित:** :– ऋत्विग् शब्दात् तदर्हतीत्यर्थे । ऋत्विजमर्हति = आर्त्विजीन: (V-1-71).

**तद्धित:** :– भूते इत्यर्थे । मासंभूतो शिशु: मासीन: । अत्र यत्प्रत्ययोऽपि मास्य: (V-1-81).

**तद्धित:** –: धान्यानां भवने क्षेत्रे खञ् । मौद्गीनं क्षेत्रम् (V-2-1)

तिलादिभ्य: वा खञ् । तैलीनम् (V-2-4).

कृत इत्यर्थे । सर्वचर्मीण: (V-2-5) पक्षे ख: ।

भूतपूर्वे अत्र गोष्ठ: आसीत् इति वाच्ये गोष्ठीनो देश: (V-3-18).

अश्वस्यैकाहगम: (V-2-19) आश्वीन: ।

शालीन: शालाप्रवेशनमर्हति । कौपीनं कूपावतारमर्हति पापम् (V-2-20).

जीवति इत्यर्थे । व्रातेन जीवति (V-2-210) व्रातीनः।

साप्तपदीनं सख्यम् । (V-2-22).

हैयंगवीनं घृतम् (V-2-23).

# खण्डच्

**तद्धितः** :– समूहार्थे कमलादिभ्यः (वा) इनित्रक॰ (IV-2-51). सूत्रे कमलखण्डः। वृक्षादिभ्यः खण्डः। भिक्षादिभ्यः अण् (IV-2-38) सूत्रस्थ वृक्षखण्डः काशिका।

## खमुञ्

**कृत्** :– कर्मण्युपपदे समानकर्तृकयोः पूर्वकाले आक्रोशे अर्थे चोरंकर-माक्रोशति (III-4-25).

# खय्

**प्रत्याहारः** :– शर्पूर्वाः खयः (VII-4-65, VIII-3-6),

# खर

**प्रत्याहारः** :– "खरवसानयोः विसार्जनीयः" (VIII-3-15 & 54). "खरि च" (VIII-4-55).

# खल्

**प्रत्याहारः** :– (1) तयोरेव कृत्यक्तखलर्थाः (III-4-70) इति भाव-कर्मणोरपि खल् ईषदाद्युपपदेषु कृच्छ्रार्थे अकृच्छ्रार्थे च खल्। ईषत्करोऽयं भवता। दुष्करोऽयं भवता। ईषद्भोजः दुर्भोजोऽयं अपूपो दन्तहीनेन त्वया (III-3-126).

(2) खलर्थेषु वासरूपविधिर्नास्ति (III-1-94).

(3) ईषादाढ्यंभवं भवता । सौलभ्येन भवान् आढ्यो भवितुं योग्यः (III-2-127)

# खश्

**कृत्** :– एज् धातोः कर्मण्युपपदे । जनान् एजयति जनमेजयः । वृक्षमेजयः । शित्वात् सार्वधातुकः । वातमजाः मृगाः । शुनिन्धयः (वा) (III-2-28).

स्तनन्धयः । नासिकंधमः (III-2-29)

नाडिन्धयः । मुष्टिन्धयः (III-2-30)

उत्पूर्वात् रुजिधातोः कूलमुद्रुजो प्रवाहः । वह धातोः कूलमुद्वहः (III-2-31).

वहंलिहः (वाहलिहः) अभ्रंलिहः (III-2-32).

परिमाणार्थे । प्रस्थं पचा स्थाली (III-2-33).

मितंपचा ब्राह्मणी । नखंपचा यवागूः (III-2-34 ).

विधुन्तुदः राहुः । अरुस् + तुद् = "अरुर्द्विषदजन्तस्य मुम्" (VI-3-67). इति मुम् । अरु + मुम् + स् + तुद् । संयोगान्तऽस्य लोपः । (VIII-2-23) अरु मुम् + तुद् । मोऽनुस्वार : (VIII-3-23).

अरुं + तुद् । तुदधातोः विकरणम् । अरुंतुद् + श + खश् = अरुं + तुद् अ + अ । अतो गुणे (VI-1-94) पररूपे अरुन्तुदः (III-2-35).

असूर्यंपश्या राजदाराः । ललाटन्तपः सूर्यः (III-2-36).

**निपाताः** :– उग्रंपश्यः । इरया माद्यति इरम्मदः । क्रूरदृष्टिः । विद्युत् ज्योतिः । पाणिन्धमः पन्थाः । यस्मिन् पथि गम्यमाने रात्रौ पश्वादीनां वारणाय पाणयो ध्मायन्ते (III-2-37).

कृत् :– आत्ममाने अर्थे आत्मानं पण्डितं मन्यते पण्डितंमन्यः । मन धातोः दिवादित्वात् श्यन् । अरुर्द्विषदिति (VI-3-67) मुमागमः । णिनिरपि – पण्डितमानी । (III-2-83).

# खिष्णुच्

तद्धितः :– आढ्यंभविष्णुः (III-2-57) च्व्यर्थेषु अच्व्यन्तेषु भूधातोः कर्तरि ।

## खुकञ्

तद्धितः :– अयमपि तथा । आढ्यंभावुकः (III-2-57).

च्व्यर्थेषु अच्व्यन्तेषुप आढ्यादिषूपपदेषु कृधातोः करणेऽर्थे । अनाढ्यं आढ्यं कुर्वंति अनेन अढ्यङ्करणम् । स्थूलङ्करणम् । भग्नङ्करणम् । पलितङ्करणम् । अन्धङ्करणम् (III-2-56).

# ख्युन्

अत्र स्त्रियां - अढ्यङ्करणी । नञ्स्नञीकक् (वा) "टिड्ढाणञ्" (IV-1-15) सूत्रे ।

—o—

# ग

इत् "क्ङिति च" (I-1-5) गुणवृद्धिनिषेधः ।

**उणादि** :– दहेः हलोपः, दस्य नः । नगः पर्वतः (739).

**उणादि** :– गॄ निगरणे इत्यस्मात् । गर्गः । **गुणः** (125).

# गक्

**उणादि** :– मुदि हर्षे इत्यस्मात् मुद्गः । कित्वान्नगुणः । धान्यविशेषः ( 125 ).

# गन्

**उणादि** :– गम्यद्योः । गमि – गङ्गा । अद्गः पुरोडाशः (120).

**उणादि** :– गन् कित् भवति। छागः। पूगः (121).

**उणादि** :– भृञः कित् नुट् च । भृङ्गः (122).

**उणादि** :– शृणातिः ( हिंसायां ) ह्रस्वश्च । शृङ्गम् (123).

**उणादि** :– शकुनौ । शार्ङ्गम् । नुट् च । अचो ञ्णिति वृद्धिः (124)

# गमिः

**आदेशः** :– णौ गमिरबोधने (II-4-46).

# ग्स्नुः

ग्लाजिस्थश्च ग्स्नुः । ग्लास्नुः । जिष्णुः । स्थास्नुः । भूष्णुः । जिष्णुरित्यत्र न गुणः (III-2-139).

## गाङ्.

**आदेशः** :– गाङ् लिटि (II-4-49).

## गोष्ठम्

**तद्धितः** :– गोष्ठजादयः स्थानादिषु पशुनामादिभ्यः उपसंख्यानम् (वा सम्प्रोदश्च कटच् (V-2-29) सूत्रे गोगोष्ठम् । महिषीगोष्ठम् ।

## ग्रामच्

**तद्धितः** :– समूहार्थे । गुणग्रामः (वा) तस्य समूहः (IV-2-37).

## ग्मिनिः

**तद्धितः** :– मत्वर्थे । प्रशस्ता वाक् वाग्मी । प्रशस्ता वाग् विद्यते अस्मिन् (V-2-124),

0—0

# घः

**तद्धितः** :– घादिप्रत्ययस्य "इय" इत्यादेशः (VII-1-2) क्षत्रात् घः (IV-1-138) क्षत्रियः ।

**आदेशः** :– किमिदम्भ्यामुत्तरस्य मतुपो घादेशः । घस्य इय् । किं + मतुप् = घः = कियान् । एवं इयान् (V-2-40).

दकारादेः धातोः हस्य घ इति भवति झलि पदान्ते च । द्रोग्धा काष्ठधक् । दोग्धा गोधुक् । द्रोढा । (VIII-2-33).
ऋतेरीयङ् । (III-1-29) इति ज्ञापकं धातुप्रत्ययानामादेशा न ।

**संज्ञा** :– तरप् तमपौ घः (I-1-22) संज्ञा घ इति ।

करणाधिकरणयोः । "पुंसि संज्ञायां घः प्रायेण" (III-3-118)

उरश्छदः । दन्तच्छदः संज्ञा एताः । अत्र घकारः छादेर्घेऽद्व्युपसर्गस्य (VI-4-96) इति एकोपसर्गः ह्रस्वार्थम् ।

प्रच्छदः । अद्व्युपसर्गे समुपच्छादः । गोचरादयः अस्मिन्नेवार्थे घप्रत्ययान्ता निपात्यन्ते । गोचरः (III-3-119). ।

**कृत्** :– करणाधिकरणयोरेव "खनो घ च" आखानः । आखानः (III-3-125).

**तद्धित्** :– अपत्यार्थे क्षत्रियः (IV-1-138).

**तद्धितः** :– सास्य देवता इत्यर्थे अपोनपात् देवता अस्य हविषः इत्यर्थे अपोनप्त्रियं हविरिति निपातः । घप्रत्ययश्च । एवं अपां न पात् इत्याख्य देवता यस्य हविषः तस्य अपांनप्त्रियम् इति (IV-2-27) अस्मिन्नर्थे छप्रत्ययोऽपि (IV-2-28).

**तद्धितः** :– महेन्द्रशब्दात् महेन्द्रियं हविः । छाणावपि (IV-2-29).

**तद्धितः** :- शेषे राष्ट्रावारपारात् घखौ। राष्ट्रियः। पश्य खः (IV-2-93)· घ प्रत्यये परतः पूर्वस्य ह्रस्वः भाषितपुंस्कस्य ङीबन्तस्य।

1. घरूप (VI-3-43) ब्राह्मणितरा।
2. अङ्यन्तस्य नद्याः वा एकाचोऽपि। स्त्रितरा। स्त्रीतरा। ईयसुन् उगित्।
3. उगितश्च। श्रेयसितरा–श्रेयसीतरा।

घसंज्ञकौ तरप्तमौ (I-1-22) यदा किम्।

एकारान्तपद, तिङन्तपद, अव्यय एतेभ्यो भवतः तदा आम्प्रत्ययो भवति द्रव्यप्रकर्षे वाच्ये। किं तराम्। किं तमाम्। पूर्वाह्णे तराम्। पूर्वाह्णे तमाम्। पचति तराम्। पचति तमाम्। उच्चैस्तराम्। उच्चैस्तमाम् (V-4-11).

**तद्धितः** :- अग्रशब्दात् भव इत्यर्थे घः। अग्रियः (IV-4-117).

**तद्धितः** :- भव इत्यर्थेधः। समुद्रियाणाम् नदीनाम्। अभ्रियस्यैष घोषः। यतोऽपवादः (IV-4-118)

**तद्धितः** :- सहस्रशब्दात् तृतीयासमर्थात् संमितिः = तुल्य इत्यर्थे सहस्रियः अग्निः। सहस्रतुल्यः (IV-4-135).

**तद्धितः** :- मतौ इत्यर्थे च सहस्रियः सहस्रमस्य विद्यते (IV-4-136).

**स्वार्थे** :- छ· नक्षत्रियेभ्यः स्वाहा (IV-4-141)·

**तद्धितः**– "तदर्हति" इत्यर्थे यज्ञशब्दात् यज्ञियः ब्राह्मणः यज्ञे अर्हः इत्यर्थः (V-1-71).

**आदेश** :- "किमिदम्भ्यां वो घः" वस्य घः। कियान्। इयान्। "इदं किमोरीश्की" (VI-3-90) अत्र "अस्य परिमाणं" इत्यर्थे वतुप् (V-2-40).

# घच्

**तद्धितः** :- क्षेत्रियच् परक्षेत्रे चिकित्स्यः (V-2-92) परक्षेत्रे चिकित्स्य इत्यर्थे परशब्दलोपः। परक्षेत्रशब्दात् सप्तमी समर्थात् घच्। क्षेत्रियः व्याधिः। क्षेत्रियं कुष्ठम् (V-2-92).

**निपातः** :- इन्द्रियम्। इन्द्रदृष्टमित्यर्थे, इन्द्रलिङ्गमित्याद्यर्थेषु च (V-2-93).

## घञ्

**कृत्**:- धातुविशेषेभ्यः त्रिष्वपि कालेषु विशेषनिर्देशाभावात् कर्तरि कृत् (III-4-67,) इति कर्तरि पद्यतेऽसौ - पादः, ।रुज्यते-रोगः। विशति-वेशः। स्पृशति-स्पर्शः। सृधातोः चिरस्थायी इति अर्थे । एवं चन्दनसारः। खदिरसारः (III-3-116, 117).

**कृत्** :- भावे धातोः। पाकः। त्यागः। रागः (III-3-18).

**कृत्** :- अकर्तरि च कारके संज्ञायाम् (III-3-19) कर्तृभिन्नकारकं संज्ञाभूतम्। विवाहः। प्रासः आयुधविशेषः।

**कृत्** :- परिमाणे वाच्ये सर्वेभ्यः धातुभ्यः - तण्डुलनिचायः। ग्रहवृदृ (III-3-58) अप् प्रत्यये प्राप्ते घञ् विधिः (III-3-20).

**कृत्** :- इङ् धातोरपि कर्तृभिन्ने कारके संज्ञायाम्।

(1) तथा भावे च। अधि + इ + घञ् = अध्यायः। वृद्धौ अयादेशे यण्। एरच् (III-3-56) इति अचि प्राप्ते घञ् विधिः(III-3-21).

(2) सोपसर्गस्यैव रुधातोः अकर्तृककारके संज्ञायाम्। संरावः। विरावः। आरावः (III-3-22).

(3) यु दु द्रु धातुभ्यः समुपसर्गयुक्ते एव अकर्तृककारके। संयावः। सन्दावः। सन्द्रावः (III-3-23).

(4) अनुपसर्गे एवं एतेभ्यः। श्रायः। नायः। भावः (III-3-24).

(5) वि इत्युपसर्गे एव । विक्षाव: । विश्राव: । (III-3-25).

(6) णीञ् धातो: । अवनाय: । उन्नाय: (III-3-26).

(7) प्रपूर्वादेव । प्रद्राव: । प्रस्ताव: । प्रस्राव: (III-3-27)

(8) निपूर्वादेव । निष्पाव: पवित्रीकरणम् (III-3-28).

(9) अभिलाव: छेदनम् (III-3-28).

(10) उत्–उद्गार: । नि–निगार: (III-3-29).

(11) कृधातो: धान्यविषये एव । उत्कार: । निकार: (III-3-30).
अत्रापि कर्तृभिन्ने कारके इत्यनुवर्तते (III-3-42).

कृत् :– सम्पूर्वकष्टुञ् धातो: यज्ञार्थ एव । संस्ताव: यज्ञ: (III-3-31).

कृत् :– अयज्ञे विषये प्रपूर्वकस्तृधातो: । शङ्खप्रस्तार: ।छन्दप्रस्तार: (III-3-32).

कृत्:– विपूर्वक अवधातो: शब्दविस्तारभिन्नविस्तारे । प्रथने । पटस्य विस्तार: (III-3-33),

कृत् :– छन्दो नाम्नि घञ् । विष्टार पङ्क्ति: छन्द: एव ।

विष्टारबृहतीछन्द: (III-3-34).

उदि ग्रह: । उद्ग्राह: । विद्याविचार: (III-3-35).

संङ्ग्राह: मल्लस्य मुष्टि: (III-3-36).

कृत् :– परिणाय: । द्यूते सर्वतोमुखं शारान् क्षिपति । परिपूर्वक नी धातु: न्याय: । निपूर्वक इधातु: अभ्रेषे इदमत्रोचितमित्यर्थे (III-3-37).

परिपूर्वक इण् धातो: अनुपात्यये क्रमप्राप्तकर्तव्यस्यानतिपाते अर्थे अद्यतनपर्याय: । श्व: मम (III-3-38).

विपूर्वकशीङ् धातो: शयन पर्याये । श्व: तव विशाय: । ममोपशाय: (III-3-39).

**कृत्** :– चौर्यरहिते हस्तेनादाने गम्यमाने चिञ् धातोरेव। पुष्पप्रचायः। फलप्रचायः। चिञ् धातोः घञ् प्रत्यये वृद्धि, अयादेशयोः कृतयोः प्रचायः इति सिद्धम्। अनन्तरं पुष्पेन सन्धिः (III-3-40)

**कृत्** :– चिञ् धातोः घञि ककारादेशः एष्वर्थेषु।

1. निकायः निवासः एषोऽस्य निकायः।
2. चिति – चिताग्निः आकायमग्निं चिनोति।
3. शरीरे – अकायं ब्रह्म। शरीररहितम्।
4. उपसमाधानम् – राशिः महान् धान्योपसमाधिः (III-3-41).
5. अनौत्तराधर्ये उच्चनीचभावरहिते जनसङ्घे ब्राह्मणनिकाय (III-3-42).

**कृत्** :– आक्रोशे गम्यमाने अवपूर्वक ग्रहेः। अवग्राहो दुष्टः ते भूयात्। तथा निपूर्वकग्रहेः निग्राहो दुष्टः भूयात् (III–3–45) अत्रापि कर्तृभिन्ने कारके इति वर्तते (III-3-55)

**कृत्** :– लिप्सार्थे – पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी।
स्रुवप्रग्राहेण चरति दक्षिणार्थी (III-3-46).

**कृत्** :– यज्ञे अभिधेये उत्तरपरिग्राहः – दर्शपूर्णमासः। अधरपरिग्राहः। (III-3-47).

**कृत्** :– धान्यविशेषे निपूर्वक वृधातोः नीवाराः। अत्र वृङ् वृञ् उभयोर्ग्रहणम् (III–3–48).

**कृत्** :– उत्पूर्वात् श्रि धातोः उच्छ्रायः। यु धातोः उद्यावः एकी–करणम्। पू धातोः उत्पावः यज्ञपात्रसंस्कारः। द्रुधातोः उद्द्रावः धावनम् (III-3-49) आङ्पूर्वात् रु धातोः आरावः। प्लु धातोः आप्लावः पक्षे ॠदोरप्। आरवः। आप्लवः (III-3-50)

**कृत्** :– अवपूर्वात् ग्रहधातोः वर्षप्रतिबन्धे अर्थे अवग्राहो देवस्य। पक्षे ग्रहवृदृ (III-3-58) इति अप् अवग्रहः (III-3-51).

प्रे वणिजाम् । तुलाप्रग्राहेण चरति वणिक् । पक्षे अप् तुलाप्रग्रहेण (III-3-52).

**कृत्** :- रश्मौ वाच्ये । प्रग्राहः प्रग्रहः । (III-3-53) .

**कृत्** :- वृणोतेराच्छादनेऽर्थे । प्रावारः । प्रवरः (III-3-54).

**कृत्** :- परिपूर्वात् भूधातोः अवज्ञानेऽर्थे । परिभावः । परिभवः (III-3-55).

**कृत्** :- करणे-अधिकरणे च संज्ञायाम् ।

(1) अवे उपपदे तॄ , स्तृञ्भ्याम् । अवतारः । अवस्तारः (शिविर) (III-3-120).

(2) हलन्तत् धातोः घञ् । लेखः । वेदः । वेष्टः (III-3-121).

(3) अधीयते अस्मिन्नित्यध्यायः । नीयन्ते कार्याणि अनेनेति न्यायः । उद्युवन्ति मिलन्ति जना अस्मिन्नित्युद्यावः । संहृियन्ते अनेनेति संहारः (III.3-122).

(4) उदङ्कः निपातः अनुदके विषये ।

उत्+अंचु , चजोः कु (VII-3-52) इति कुत्वम् ।
उत्+अन् (न) अक् । नश्चापदान्तस्य (VIII-3-24)
उत्+ अं+क् । अनुस्वारस्य (VIII-4-58).
उदङ्कः (III-3-123).

(5) आनायः । मत्स्यानां जालम् । आङ+नीञ्+घञ् (III-3-124)

(6) आखानः आखनन्ति अनेन अस्मिन् वा । आखानः । आङ्+खन् +घञ् । घ च । आखन इति (III-3-125).

# घथिन्

**उणादि** :- नि+षंज=निषंगथिः आलिंगकः (527).
उद्यर्तेः चित् । उत्+ॠ+घथिन् उदरथिः । समुद्रः (528)
सृ-गतौ । णित् । सारथिः (529).

# घन्

तद्धितः–सास्य देवता इत्यर्थे शुक्रियं हविः । शुक्रियो मन्त्रः IV-2-26
तुग्रात् भवार्थे छं । तुग्रियः । त्वमग्ने वृषभस्तुग्रियाणाम् (IV-4-115).

तद्धितः :–तदर्हति इत्यर्थे । पात्रमर्हति पात्रियः (V-1-68).

तद्धितः :– बहुवचो मनुष्यनाम्नः प्रातिपदिकात् अनुकम्पायां अनुकम्पा-युक्तात् नीतौ गम्यमानायाञ्च । देव+घन् =देवियः । अन्ये इलच्, । ठच् (V-3-79).

उपशब्दादि प्रातिपादिकात् बहुवचः । उप+देवदत्त+घन्=उपियः (V-3-80)

# घस्

तद्धितः :–ऋतु शब्दात् छन्दसि तदस्य प्राप्तमित्यर्थे । ऋतु+घस् । घसः सित्वात् ऋतो पदत्वं (I-4-16) "ओर्गुणः" (VI-4-146) गुणो न यण् अयन्तेयो निऋत्वियः (V-1-105).

# घि

संज्ञा:–शेषो घ्यसखि (I-4-79) हरिः । भानुः । संज्ञाफलं "घेर्ङिति" इति गुणः । हरये ।

# घिन्

साधरणे निर्देशः घकारे प्रत्ययानां चजोः कुघिण्यतोः (VII-3-52)

# घिनुण्

कृत् :– शमादिभ्यः धातुभ्यः तच्छीलादिषु वर्तमाने काले । शामी । दमी । तमी । (III-2-141).

कृत् :– सम्+ पृच् +घिनुण्=सम्पर्की (III-2-142).

कृत् :– वि + काष + घिनुण् = विकाषी । विलासी (III-2-143)

कृत् :– अप + लष + घिनुण् = अपलाषी । वि + लष् + घिनुण् = विलासी (III-2-144 & 143).

कृत् :– प्र + लप + घिनुण् = प्रलापी (III-2-145).

## घु

संज्ञा :– "दाधाघ्वदाप् (I-1-20).

## घुरच्

कृत् :– तच्छीलादिषु भञ्ज + घुरच् = भङ्गुरः (III-2-161). अयमन्तोदात्तः चितः । (VI-I-160).

भङ्गुरं । अनुदात्तं पदमेकवर्जम्"(VI-1-158). इति आद्यौ द्वौ अनुदात्तौ"

## ङ

इत् :– 1. गुणवृद्धिनिषेधः = क्क्ङिति च (I-1-5).

2. ङिदनेकाल्प्यत्यादेशः । ङिच्च" (I-1-53).

3. घेः ङिति सुपि गुणः । घेर्ङिति" (VII-3-111).

4. "ङिति ह्रस्वश्च" (I-4-6) नदी संज्ञातिदेशः । कृतये ।

5. ङिति परतः ग्रहिज्यादि धातूनां सम्प्रसारणम् । ग्रहिज्या (VI-I-16) जरीगृह्यते ।

6. आत्मनेपदद्योतकम् । अनुदात्त ङित आत्मनेपदम् । (I-3-12)

7. ङिति इटि परतः आकारान्तधातोः आलोपः । "आतो लोप इटि च" (VI-4-64).

8. सामान्येन ङित् प्रत्ययग्रहणम् "गाङ्कुटादिभ्यः" (I-2-1)

## ङञ्

प्रत्याहारः :- ङ्ण्न् झ्भ् इत्येषाम् । एतदप्यस्तु ञकारेण ङमो ह्रस्वादचि ङ्मुट् नित्यमिति महाभाष्यं माहेश्वर सूत्रे ।

## ङम्

प्रत्याहारः :- ङमो ह्रस्वादचि ङमुट् नित्यम्" (VIII-3-32).

## ङमुट्

प्रत्याहारः :-ङमो ह्रस्वादचि ङमुट् नित्यम्" (VIII-3-32).

## ङस्

सुप्:- षष्ठ्येकवचनम् (IV-1-2). "स्य" इत्यादेशस्य(VII-1-12).

## ङसि

सुप् :- पञ्चम्येकवचनम् (IV-1-2) आत्, स्मात् । (VII-1-12) b). (VII-1-15). आदेशानां स्थानी ।

## ङि

सुप् :- सप्तम्येकवचनम् । (IV-1-2). अस्यादेशः (VII-3-116 to VII-3-119).

## ङितः

लकारः :- ङितो लकाराः लङ् लिङ्, लुङ्, लृङ् (III-4-99).

## ङी

स्त्रीप्रत्ययः :- साधारणनिर्देशः ङीप्, ङीष्, ङीन् इत्येतेषाम् ।

## ङीन्

**स्त्रीप्रत्ययः** :– शार्ङ्गरवाद्यञो ङीन्" (IV-1-73). शार्ङ्गरवादि शब्देभ्यः अनुपसर्जनेभ्यः जातिवाचिभ्यः तथा अञन्तेभ्यः स्त्रियां ङीन् भवति ञिनित्यादि (VI-1-191). इति ङीन्। तस्य आद्युदात्तत्वम्। ङीपोऽपवादः। शार्ङ्गरवी। कापटवी। अञन्तात् बैदी। और्वी (IV-1-73).

## ङीप्

**स्त्रियाम्** :– ऋकारान्तेभ्यः। कर्त्री। नकारान्तेभ्यः। दण्डिनी। ऋन्नेभ्यो ङीप्" (IV-1-5) उक् यथाकथंचित् इन् यत्र तस्मात् स्त्रियां ङीप्। भू – भवति। अतिभवति पच् + शतृ = पचन्ती। दीव्यन्ती। उगितश्च" (IV-1-6). टित् प्रत्ययः ढ अण् इत्यादिप्रत्ययान्तेभ्यः प्रातिपदिकेभ्यः अनुपसर्जनेभ्यः ङीप्। कुरुचरी। ब्रहुव्रीहि-समासे तु उपसर्जनात् कुरुचरा इत्येव। "टिड्ढाणञ्" (IV-1-15).

यञन्तात् प्रातिपदिकात् अनुपसर्जनात् गार्गी। "यञश्च" (IV-1-16) प्राचां मते यञन्तात् स्त्रियां ष्फः तद्धितप्रत्ययो भवति। तत्र ङीप्। गार्ग्यायणी। अन्येषां मते तु गार्गी। "आयनेयी"(VII-1-2) इति आयनादेशः। षिद्गौरादिभ्यश्च (IV-1-41) इति ङीष् (IV-1-17).

प्रथमे वयसि वर्तमानेभ्य अदन्तेभ्यः कुमारी "वयसि प्रथमे" (IV-1-20).

## ङीष्

स्त्रियां द्विगुसंज्ञकात् अनुपसर्जनात् प्रातिपदिकात् पञ्चपूली (IV-1-21)

## ङीष्

रक्तपीतवर्णवाचिशब्दात् तकारोपधभिन्नात् अदन्तादनुदात्तात् ङीष् सारंगी । शबली (IV-1-40).

षित् प्रत्ययान्तात् शिल्पिनि ष्वुन् (III-1-145) खनकी । नर्तकी । गौरादिभ्यः-गौरी । "षिद्गौरादिभ्यश्च" (IV-1-41).

जानपदादिभ्यः वृत्त्याद्यर्थविशेषेषु ङीष् । जानपदी । अन्यत्र ङीप् । जानपदी । स्वरे विशेषः (IV-4-42) "जानपदकुण्डगोण" इत्यादि। शोणः रक्ताश्वः । प्राचां मते शोणी । अन्यत्र शोणा । शोण + ङीष् "यस्येति च" (VI-4-48) इति अलोपः (IV-1-43).

उकारान्तात् गुणवचनात् अनुपसर्जनात् । पट्वी। मृद्वी । पक्षे पटुः । मृदुः । "वोतोगुणवचनात्" (IV-I 44).

बह्वादिगणात् (वा) बह्वी। पक्षे बहुः । बह्वादिभ्यश्च"

(IV-1-45) छन्दसि बह्वादिभ्यः नित्यं । बह्वी (IV-1-46).

विभु, प्रभु, सम्भु एते डुवसंज्ञायां (111-2-80) इति डुवप्रत्ययान्ताः तेभ्यः छ· स्त्रियां नित्यं ङीष्। विभ्वी च । प्रभ्वी च । सम्भ्वी च (IV-1·47).

पुरुषसम्बन्धात् यत् प्रातिपदिकं स्त्रियां वर्तते पुरुषस्यैवाख्याभूतं तस्मात्। गणकी। ज्योतिर्विद्भ्यः या स्वयमेव ज्योतिषं जानाति सा गणिका (IV-1-48).

इन्द्रादिशब्देभ्यः पुंयोगादाख्यायां ङीष् आनुक् च । इन्द्राणी इन्द्रस्य स्त्री । "इन्द्रवरुणभवशर्वरुद्रमृड (IV-1·49).

महत् हिमं हिमानी । महत् अरण्यं अरण्यानी (वा) । यवात् दोषे एव । यवानी दुष्टो यवः (वा).

यवनात् लिप्यामेव । यवनानी (वा) उपाध्यायी अथवा उपाध्यायानी (वा) आचार्यानी । आचार्या ।

स्त्रीः- करणपूर्वात् क्रीतशब्दान्तात् अनुपसर्जनात् प्रातिपदिकात् ङीष् । वस्त्रक्रीती । "क्रीतात् करणपूर्वात्" (IV_1-50)

अल्पाख्या अल्पत्वकथनं क्तान्तं तस्मात् अभ्रविलिप्ती द्यौः अल्पाभ्रव-न्नभः । सूपविलिप्ती पात्री । पात्र्यां अल्पासेन सूपः (IV-I-51) क्तान्तो ब्रहुव्रीहिः अन्तोदात्तः तस्मात् स्त्रियाम् । ऊरुभिन्नी । "जाति काल" (VI-2-170) इति अन्तोदात्तः । केशलूनी । अत्र निष्ठायाः परनिपातः । जातिकाल (II-2-36) वार्तिकम् । निष्ठातो नः ल्वादिभ्यः (VIII-2-44&IV-2-52)

बहुव्रीहेः अन्तोदात्तात् क्तान्तात् "अस्वांगपूर्वपदाद्वा" (IV-1-53) पलाण्डुभक्षिती–पलाण्डुभक्षिता । सुरापीती–सुरापीता ।
"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" (IV-1-54) चन्द्रमुखी–चन्द्रमुखा मृदुहस्ती–मृदुहस्ता । तुङ्गनासिका यस्याः तुंगनासिकी–तुङ्ग-नासिका इत्यादयः (IV-1-55).

छ. दीर्घजिह्वी (IV-1-59).

"स्वाङ्गाच्चोप" (IV-1-54). "न क्रोडादिबह्वचः" (IV-1-56, 57 58). इति निषेधः सर्वोपि अत्रोपपद्यते । तेन यत्र ङीष् प्राप्तः यत्र च निषिद्धः तत्र सर्वत्र दिक्पूर्वपदात् प्रातिपदिकात् ङीषः स्थाने ङीप्। स्वरे विशेषः । प्राङ्मुखं यस्यां प्राङ्मुखी –प्राङ्मुखा । न क्रोडेति यत्र ङीषो निषेधः ङीबपि न । कल्याणक्रोडा । संयोगोपधशब्दात् तावत् नैव । प्राक्गुल्फा (IV-1-60).

वहधातोः ण्विप्रत्ययान्तात् (III-2-64) वाह इति रूपं तस्मात् ङीष्। दित्यवाट् च मे दित्यौही च मे (IV-1-61) वाह ऊठ् ।

सखि शब्दात् ङीष् । यस्येति (VI-4-148) इति स्वोत्तरवर्तिन इकारस्य लोपः । सख् + ई = सखी । वेदेऽपि अशिशु + ङीष् अशिश्वी (IV-1-62). यत् नियतं न स्त्रीवाचकं नदीत्यादिवत् यकारोपधभिन्नं च स्त्रीजाति वाचकं तस्मात् ङीष् । तटी । ब्राह्मणी । मयूरी (IV-1-63).
पाकपर्णाद्युत्तरपदबहुव्रीहौ, ओदनापाकी, शङ्कुकर्णी, शङ्खपुष्पी, दासीफली । गोवाली (IV-1-64).

मनुष्यजातिवाचिनः अनुपसर्जनात् प्रातिपदिकात् इकारान्तात् स्त्रियाम् - दाक्षी। अवन्ती (IV-1-65).

## ङुट्

ङमो ह्रस्वादचि (VIII-3-32) सूत्रे काशिका। ङुट्। प्रत्यङ्ङास्ते।

## ङे.

चतुर्थ्येकवचनम् (IV-1-2).

ङेर्यः (VII-1-13) सर्वनाम्नः स्मै (VII-1-14).

## ङ्वनिप्

**कृत्** :– षुञ् + ङ्वनिप्, भूते = सु + वन् = ह्रस्वस्य (VI-1-69). तुगागमः, दीर्घत्वं, नलोपः। सुत्वी - सुतवान्।

यज्ञः = इष्टवान्–यज्वा (III--2-103).

ङपावितौ। इकार उच्चारणार्थः। ङित्वान्नगुणः।

## च

**इत्** :- "चुटू प्रत्ययाद्यौ (1-3-7).

"स्वरः" चित् स्वरः "चितः" (IV-1-163) भङ्गुरम्। "तद्धितस्य" (IV-1-164) कुञ्चादिभ्यः च्फञ् (IV-I-98) कौञ्जायनः।

**संज्ञा**.- "चादयोऽसत्त्वे" (I-4-57).

**निपातः** :- चादिगणपठिताः शब्दाः निपातसंज्ञकाः यदि ते असत्ववचिनः। सत्वं = द्रव्यं, लिङ्गसंख्याकारकान्वितम्। एतेन पशुशब्दः चादिगणपठितोऽपि न निपातः।

1. चार्थाः (1)समुच्चयः, (2) अन्वादयः(3)इतरेतरयोगः (4)समाहारः।
2. मयूरव्यंसकादयश्च (II-1-72) अत्र च शब्दः अवधारणार्थकः। परममयूरव्यंसक इति समासान्तरं न भवति। "एवं पात्रे समितादयश्च"

(II-1-48) इत्यत्रापि च शब्दः अवधारणार्थकः ।
क्वचित् सूत्रेषु च इति अनुवृत्तिबोधकः ।

## चङ्.

**तिङ्.** :– च्लि लुङि (III-1-43) इत्यत्र च्लेरादेशः । "णिश्रिदुश्रुभ्यः कर्तरि चङ्" (III-1-48) कमेश्च्लौ (वा)
विभाषा धेट्श्व्योः (III-1-49).
गुपेश्छन्दसि (III-1-50).
नोनयति (III-1-51).
चङि (VI-1-11).
सन्वल्लघुनि (VII-4-93).
णौचङ्युपधाया (VII-4-1)

## चट्

**उणादि** :– कूची चित्रलेखनिका (531) समीचः समुद्रः(532).

## चण्

निपातोऽयं चेदित्यर्थे णिद्विशिष्टः । अयं चेण्(न्)मरिष्यति । एतन्निपात युक्तं तिङन्तेनानुदत्तं भवति (VIII-1-30).

## चणप्

**तद्धितः**– तेनवित्तः चुञ्चुप् चणपौ (V-2-26) वित्तः = ज्ञातः विद्याचणः

## चतसृ

**आदेशः** :– चतुर् इत्यस्य स्त्रियाम् (VII-2-99) त्रिचतुरोः स्त्रियां तिसृ चतसृ ।

## चतुः

**उणादि** :– एधि = एधतुः पुरुषः । वहतुः अनड्वान् (78).

# चय्

चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् वार्तिकम् "ङ्णोः कुक्टुक् (VIII-28) प्राङ्क् षष्ठः इति स्थिते वार्तिकपक्षे प्राङ्ख् षष्ठः इति टुक् विषये सुगण्ट् षष्ठ इति स्थिते सुगण्ठ् षष्ठः इति च ।

# चर्

**आदेशः** :- "अभ्यासे चर्च" झलां जशः, खञां चरः (VIII-4-54). "खरि च (VIII-4-55) खरि परे झलां चरः स्युः । हल्सन्धिः । तत् + शिवः = तच्छिवः । वावसाने" (VIII-4-56) रामात् । रामाद् । झलां चरः ।

# चरट्

**तद्धितः** :- 1. भूतपूर्वे (V-3-53) आढ्यचरः ।

2. षष्ठ्या रूप्य च (V-3-54) षष्ठ्यन्तात् प्रत्ययविधानात् सम्प्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं न तु प्रकृत्यर्थस्य । तेन देवदत्तस्य भूतपूर्वो गौः देवदत्तचरः इति सिद्ध्यति ।

# चानश्

**कृत्** :- ताच्छील्यवयोवचन शक्तिषु चानश् (III-2-129) भोगं भुंजानः । शीलकवचं बिभ्राणः । शत्रुं निघ्नानः शक्तः । अयं प्रत्ययः न लादेशः । केवलं वर्तमानकालद्योतकः । लादेशत्वाभावात् शित्वेनात्मनेपदित्वात् परस्मैपदिधातोरपि अस्य प्रवृत्तिः । लादेशत्वाभावादेव नायं भावकर्मणोः । कर्तर्येव ।

# चाप्

**स्त्री** :- यङश्चाप् (IV-1-74) यङ् इति ञ्यङ् ष्यङ् द्वयोर्ग्रहणम् ।

I. आम्बष्ठ्यः "वृद्धेत्कोसल" (IV-1-171) ञ्यङ् । आम्बष्ठस्य अपत्यं स्त्री आम्बष्ठ्या ।

2. करीषं पशुपुरीषं, तस्य गन्धइव गन्धः करीषगन्धि। उपमानाच्च इति इः । करीषगन्धेः गोत्रापत्यं इत्यर्थे अण् । कारीषगन्धिः । अणिञोरनार्षयोरिति ष्यङ् । कारीषगन्ध्या ।

अत्र चकारः स्वरे विशेषः (IV-1-74) षकारात् परो यः ञय् तदन्तादपि । शार्कराक्ष्या (वा)

# चालुः

**तद्धितः** :– मत्वर्थे हृदयालुरन्यतरस्याम् (वा) वहुलं छन्दसि (V-2-122) **सूत्रे हृदयालुः । पक्षे हृदयककः- हृदयवान् ।**

# चिक्

**उणादि** :– चिक् च । इकार उच्चारणार्थः । क इत् । स्रुव इत्यस्मात् स्रुक् कुत्वमपि (220) तनोतेः चिक् । अनो व इत्यादेशः । त्वक् (221).

# च्चिण्

**तिङ्.** :– चिण् ते पदः (III-1-60) उदपादि ।

च्लेरादेशः कर्तरि । अदीपि । अदीपिष्ट (III-1-61) कर्तरि अजन्तात् धातोः अकारि । अकृत ।

कर्मकर्तरि अजन्तात् धातोः तशब्दे परे च्लेः । अकारि कटः स्वयमेव । चिणभावपक्षे अकृत कटः तेन । कर्मकर्तरि किम्? अकारि कटः तेन (III-1-62).

**तिङ्.** – अशापि भवता (III-1-66) भावे । अकारि कटो देवदत्तेन (III-1-66) कर्मणि चिणो लुक् (IV-4-104) अकारि । चिणः परस्य लुक् ।

# चु

**संज्ञा** :– चवर्गगतानां पञ्चानां संज्ञा (I-3-7) चोः कुः (VIII-2-30) "स्तो श्चुना श्चुः" (VIII-4-40).

## चुञ्चुप्

**तद्धितः** :– "तेन वित्तः चुञ्चुप्" (V-2-26) विद्याचुञ्चुः ।

# चेलुः

**आदेशः** :– हिमेलुः । हिमात् (वा) "बहुलं छन्दसि" (V-2-122).

# च्छ

सतुक्कस्य छस्य शादेशः । प्रश्नः । विश्नः । च्छ्वोः (VI-4-19).

## च्फञ्

**तद्धितः** :– गोत्रे कुञ्जादिभ्यः च्फञ् (IV-1-98) **गोत्रसंज्ञके प्रत्यये** कुञ्जादिभ्यः च्फञ् । अपत्यं पौत्रप्रभृति गोत्रम् । **व्रातच्फञो रस्त्रियाम्** (V-3-113) इति च्फञः ञ्यः भवति । **कौञ्जायन्यः** । **कौञ्जायन्यौ** कौञ्जायनाः ।

# च्लि

**तिङ्** :– च्लि लुङि (III-1-43) च्लेरन्ये आदेशाः ।

# च्वि

**तद्धितः** :– यत् पूर्वं नाभूत् तस्य भावनम्–इत्यर्थे कृ भू अस्ति एतेषां योगे एव च्विः । सम्पूर्वकपदधातोः कर्तरि कारके वर्तमानत्वमपि आवश्यकम् शुक्लीभवति । शुक्ली स्यात् । शुक्लीकरोति । अशुक्लः पटः शुक्लः सम्पद्यते तं करोति शुक्लीकरोति । मलिनः पटः शुक्लत्वेन सम्पद्यते तं करोतीत्यर्थः (V-4-50) एवं घटीकरोति मृदम् । सम्पद्य कर्तरि इति अवश्यम् । अदेवगृहे देवगृहे सम्पद्यते इत्यत्र न च्विः, वाक्यमेव । देवगृहस्य आधेयविशेषसम्बन्धेनात्र अभूततद्भावः न कर्तुः । अत्र शुक्ल + च्विः = शुक्ल + व् "अस्य च्वौ "(VII-4-32) इति अस्य ईकारे वेरपृक्तस्य (VI-1-67) इति वकारस्य च लोपः । चकारः इत् । इकारः उच्चारणार्थः । शुक्ल + ई = शुक्लीकरोति । शुक्ली इत्यत्र सोर्लोपात् अव्ययत्वमपि ।

**तद्धितः** :– अरुःप्रभृतीनामन्तस्य लोपः च्विपरतः । अनरुः अरुस्सम्पद्यते तं करोति अरूकरोति । उन्मनीकरोति । मनसः सलोपः (V-4-51).

**तद्धितः** :– च्वौ परतः अजन्ताङ्गस्य दीर्घः । शुचीकरोति । पटू भवति (VII-4-26.).

**तद्धितः** :– अकारान्तस्याङ्गस्य च्वौः परतः ई स्यात् । शुक्ली भवति । खट्वीकरोति (VII-4-32).

## छ

**इत्** :– चुटू (I-3-7) प्रत्ययाद्यौ इतौ । तद्धितादि छादेशः । ईय इति आयने (VII-1-2).

छकारान्तानां धातूनां झलि परतः पदान्ते च षकारादेशः । प्रछ - प्रष्टा, प्रष्टम्, प्रष्टव्यम् । पदान्ते शब्दप्राट् । अन्येषामपि धातूनामेवमेव षकारादेशः। व्रश्चभ्रस्ज (VIII-2-36).

**तद्धितः** :– अपत्यार्थे । स्वसृशब्दादपत्यार्थे । स्वस्रीयः । भ्रातृशब्दादपि भ्रातृ + छ (ईय) भ्रात्रीयः (IV-1-143, 144).

**तद्धितः** :– तिकादिभ्यः फिञ् (IV-1-154) तिकस्यापत्यं पुमान् = तैकायनिः । फिञन्तात् प्रातिपदिकात् सौवीरगोत्रात् अपत्यार्थे छः । कुत्सायाम् यामुन्दायनः + छः (कुत्सायाम् ) यामुन्दायनीयः (IV-1-149).

**तद्धितः** :– द्वन्द्वसमासात् नक्षत्रेण युक्तकाल इत्यर्थे तिष्यश्च पुनर्वसुश्च = तिष्यपुनर्वसू । द्वन्दः। तस्माच्छः । तिष्यपुनर्वसवीयः कालः (IV-2-6) अत्र ओर्गुणः (VI-4-146) इति गुणः ।

**तद्धितः** :– सास्य देवता इत्यस्मिन्नर्थे देवतावाचि अपोनप्तृ, अपांनप्तृभ्यां अपोनप्त्रीयं हविः (IV-2-28) महेन्द्रियं हविः (IV-2-29) द्यावापृथ्वीयम् । अग्नीषोमीयम् (IV–2-32).

1. चातुरर्थिकः । शर्करा + छः = शार्करीयः (IV–2–84).
2. चातुरर्थिकः । उत्करीयम् । शफरीयम् (IV-2-90).

3. चातुर्र्थिकः । नडादीनां कुगागमश्च । नडकीयम् । नरा यत्र सन्ति तत्स्थानम् (IV-2-91).

**समूहार्थे** :- अश्वानां समूहः = अश्वीयः (IV-2-48),

**शैषिकः** :- वृद्धात् । गार्गीयः । शालीयः । मालीयः (IV-2-114).

**तद्धितः** :- शैषिकार्थे समासे गर्त्तोत्तरपदात् = शृगालगर्त्तीयम् (IV-2-137).

**तद्धितः** :- गहादिभ्यश्चः । अन्तःस्थीयः (IV-2-138).

**तद्धितः** :- प्राग्देशवाचिनः कटादेः । कटनगरीयम् । कटघोषीयम् (IV-2-139).

**तद्धितः** :- राजन् शब्दात् शैषिकः छः । ककारश्चान्तादेशः । राजकीयम् (IV-2-140).

**तद्धितः** :- न द्वयचः प्राच्य (IV-2-113) इति सूत्रे अण् निषिद्धः । छः अपकृष्यते । चैदीयाः । प्रौष्ठीयाः ।

**शैषिकः** :- अकान्तात् इकान्ताच्च खोपधात् च प्रातिपदिकात् देशवाचिनः वृद्धसंज्ञात् छः । अकान्तात् आरोहणकीयम् । इकान्तात् आश्वपथिकीयम् । खोपधात्-आयोमुखीयम् । (IV-2-141).

**शैषिकः**:- कन्थाद्युत्तरपदात् देशवाचिनः वृद्धात् छः । दाक्षिकन्थीयम् । दाक्षिग्रामीयम् (IV-2-142).

**शैषिकः** :- 1. पर्वतशब्दात् पर्वतीयो राजा (IV-2-143).

2. पर्वतात् अमनुष्ये वाच्ये पर्वतीयानि फलानि (IV-2-144). भारद्वाजदेशे न तु गोत्रे यौ कृकणपर्णशब्दौ व्यवहृतौ ताभ्यां शैषिकः छः । कृकणीयाम् । पर्णीयम् (IV-2-145).

**शैषिकः** :- युष्मदस्मत् शब्दाभ्याम् युष्मदीयम् । अस्मदीयम् (IV-3-1).

1. तत्र भव इत्यर्थे जिह्वामूलीयम् । अङ्गुलीयम् (IV-3-62).

2. वर्गान्तात् । कवर्गे भवः कवर्गीयः (IV-3-63).

3. वर्गान्तं प्रातिपदिकं यदा अशब्दबोधकं तत्राऽपि विकल्पेन छः युधिष्ठिरवर्गीयः (IV-3-64).

अधिकृत्य कृते ग्रन्थे । शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः (IV-3-88) एवं यमसभीयः ।

**अस्य अभिजनः** पूर्वबान्धव इत्यर्थे आयुधजीविभ्यः छः । हृद्गोलः पर्वतो एषामभिजनः इति हृद्गोलीयाः आयुधजीविनः (IV-3-91).

इदमित्यर्थे रैवतिकादिभ्यः । रैवतिकानां सङ्घः रैवतिकीयः(IV-3-131).

भक्तिसमानाधिकरणात् गोत्रार्थेभ्यः क्षत्रियार्थेभ्यश्च बहुलं वुञ् भवति । पक्षे छः भवति । पाणिनः भक्तिरस्य पाणिनीयः (IV-3-99).

**तद्धितः** :- जीवतीत्यर्थे आयुधशब्दात् छः आयुधीयः । ठनपि (IV-4-14).

**तद्धितः** :- भवार्थे छः अग्रशब्दात् । अग्रीयम् । पक्षे घोऽपि । अग्रीयम् (IV-4-117).

संज्ञायां कम्बलात् यत् भवति । कम्बल्याः ऊर्णापलशतस्य संज्ञा । संज्ञाभावे कम्बलीया (V-1-3).

**तद्धितः** :- "तस्मैहितम्" (V-1-5). इत्याद्यर्थे हविरपूपादिभ्यः (V-1-4) हविर्विशेषेभ्यः । आमिक्षीयम् । पुरोडाशीयः (V-1-4) विभाषेति वचनेन यत् अपि । आमिक्ष्यमित्यादि ।

**तद्धितः** - तस्मै हितमित्यर्थे । वत्सेभ्यो हितं – वत्सीयो गोधुक् । रोगिभ्यो हितं = रोगीयः औषधिः (V-1-5).

विकृतिवाचिनः शब्दात् प्रकृतावभिधेयायाम् अङ्गारीयाणि काष्ठानि । (V-1-12).

तदस्य तदस्मिन् स्यादित्यर्थे । प्राकारीया इष्टकाः । तदस्येति षष्ठ्यर्थे यासामिष्टकानां प्राकारः स्यात् ताः प्राकारीयाः इष्टकाः । एवं प्रासादीयं

दारु । तदस्मिन्निति सप्तम्यर्थे प्राकारो अस्मिन् देशे स्यात् इति प्राकारीया भूमिः (V-1-16).

**तद्धितः** :– 1. संयोग इत्यर्थे पुत्रशब्दात् = पुत्रीयः । पुत्रस्य निमित्त तेन संयोगः (V-1-40).

2. पुत्रस्य निमित्तं उत्पातः पुत्रीयः (V-1-40)

**तद्धितः** :– "तदर्हति" इत्यर्थे कडङ्करः = तुषः ।

1. तमर्हति कडङ्करीयो गौः । दक्षिणामर्हति दक्षिणीयो ब्राह्मणः । पक्षे यत् (V-1-69) स्थालीबिलः पाकः, तमर्हति = स्थालीबिलीयाः तण्डुलाः । पक्षे यत् (V-1-70).

**तद्धितः** :– 1. तमधीष्ठो भृतो भूतो भावी (V-1-80) छ. इत्याद्यर्थेषु वत्सरान्तशब्दात् छः। इद्वत्सरीयः । इदावत्सरीयः । (V-1-91).

2. सम् परि पूर्वात् वत्सरान्तात् छ· विषये संवत्सरीयः । परिवत्सरीयः (V-1-92).

1. "तदस्य प्रयोजनम् (V-1-109) इत्यर्थे अनुप्रवचनं प्रयोजनं अस्य अनुप्रवचनीयम् (V-1-111).

2. सपूर्वपदात् विद्यमानपूर्वपदात् समापनप्रातिपदिकात् । छन्दः समापनीयम् । व्याकरणसमापनीयम् । (V-1-112).

**तद्धितः** भावे होत्राभ्यः । अच्छावाकीयम् अच्छावाकस्य भावः ।

**तद्धितः** :– कर्मणि - अच्छावाकीयम् । (V-1-135).

**तद्धितः** :– अलंगामी (V-2-15) इत्यर्थे अभ्यमित्रशब्दात् = अभ्यमित्रीयः शत्रुणासह योद्धुं समर्थ इत्यर्थः । पक्षे यत् खौ (V-2-17).

सूक्ते सामनि चाभिधेये मत्वर्थे छः । "अस्यवाम" शब्दो अस्मिन्

इति अस्यवामीयं सूक्तम् । यज्ञायज्ञीय शब्दो यस्मिन् सामनि तत् यज्ञायज्ञीयं साम । (V-2-59).

इवार्थे । कुशाग्रमिव बुद्धिः कुशाग्रीया (V-3-105).

**तद्धितः** :- समासात् च तद्विषयात् (V-3-106) काकतालीयम् । अत्र काकागमनमिव, तालपतनमिव काकतालमिति समासः । अत्र एकस्मिन्निवार्थे काकतालमिति समास. । द्वितीयइवार्थे छः । काकतालीयम् ।

स्वार्थे दामन्यादिशब्देभ्यः । दामनीयः । दामनीयौ । छः । दामनयः त्रिगर्तषष्ठेभ्यः । एते आयुधजीविसङ्घवाचिनः । दाण्डकिः + छः दाण्डकीयः । दाण्डकीयौ । दाण्डकयः (V-3-116).

बन्धुनि = द्रव्यार्थे जात्यन्तशब्दात् ब्राह्मणजातिः + छः = ब्राह्मणजातिः । जातिरूपं द्रव्यं असिन् ब्राह्मणे अस्तीति ब्राह्मण जातिरयं ब्राह्मण इति (V-4-9).

सस्थानं तुल्यम् । स्थानान्तशब्दात् प्रातिपादिकात् छः भवति सस्थानेन चेत् स्थानान्तं अर्थवत् भवति । मातृस्थानीयः । पितृस्थानीयः। मातृसमः । पितृसमः (V-4-10).

**आदेशः** :– इषुगमियमां छः (VII-3-77) इच्छति । यच्छति । गच्छति ।

**आदेशः** :- शश्छोऽटि (VIII-4-63) झय उत्तरस्य शकारस्य छः भवति अटि परतः (वा) वाक् छेते । वाक् + शेते । श्वलिट् छेते श्वलिट्शेते (VIII-4-63) छत्वममीति वाच्यम् (वा) शश् छोटि इति सूत्रे अटीति विहाय अमीति वक्तव्यमितिवार्तिकार्थः । तच्छ्लोकेन । तच्छ्मश्रुणेत्येवमर्थम् ।

## छण्

**तद्धितः** :- अपत्यार्थे । पितृष्वसुरपत्यं = पैतृष्वस्रीयः (IV-1-132) मातृष्वस्रीयः (IV-1-134).

**तद्धितः** :–कृशाश्वादिभ्यः चातुरर्थिकः छण् । कार्शाश्वीयः (IV-2-80).

श्रविष्ठाषाढाभ्यां छण् वक्तव्यः (वा) श्रविष्ठा (IV-3-34) इति सूत्रे श्राविष्ठीयः । आषाढीयः ।

सोऽस्याभिजन (IV-3-90) इत्यर्थे तूदीत्यादिभ्यः छण् अन्ये च प्रत्ययाः । तौदेयः । शालातुरीयः (IV-3-94).

तेन प्रोक्तमित्यर्थे (IV-3-101). तैत्तिरिप्रभृति शब्दैः । तित्तिरिणा प्रोक्तं तैत्तिरीयम् । वारतन्तवीयम् (IV-3-102).

# छव्

**प्रत्याहारः** :- नश्छव्यप्रशान् (VIII-3-7).

# छस्

**प्रत्ययः** - छस् प्रत्यये परतः पूर्वस्य पदसंज्ञा (I-4-16) भवत् + छस् । अत्र भवत् इत्यस्य पदसंज्ञा । त्यादादीनि च (I-1-73) इति वृद्धि संज्ञा च । भवदीयः । अत्रपदत्वादेव तस्य दकारः।झलां जशोन्ते (VIII-2-39).

# ज

**इत्** :-चुटू (I-3-7) जितः प्रत्ययाः । जस् जसि जुस् । जित्पर्याय स्यैव राजाद्यर्थः सभा (II-4-23).

**आदेशः** :- तिङ् । हन्तेर्जः (IV-4-36) जहि ।

# जरस्

**आदेशः** :- "जराया जरसन्यतरस्याम्" (VII-2-101) अजादौ विभक्तौ अन्यतरस्याम् । निर्जरसौ । निर्जरसः । पक्षे निर्जरौ । निर्जराः ।

# जश्

**प्रत्याहारः** :- "झलां जश् झशि" (VIII-4-53) "झलां जशोन्ते" (VIII-2-39)

**सुप्** :- "स्वौजस्" (IV-1-2) प्रथमाबहुवचन म् ।

# जसि

**सुप्** :- छ. रात्रिशब्दात् जसं विना अन्यत्र ङीप् स्यात् । रात्रीभिः जस् विषये तु यास्ता रात्रयः । संज्ञायामपि (IV-1-31).

**सुप्** :- आत् जसे रसुक् (VII-1-30) अवर्णान्तात् अङ्गात् उत्तरस्य जसेः असुगागमः । ब्राह्मणासः । सोम्यासः ।

# जा

**तिङ्** :-आदेशः । ज्ञाधातोः जनधातोश्च जा इत्यादेशः शिति परतः । जानाति । जायते (VII-3-79).

# जातीयर्

**तद्धितः** :- प्रकारवचने जातीयर् (V-3-69) पटुजातीयः ।

# जाहच्

**तद्धितः** :- तस्य पाकमूले पील्वादि कर्णादिभ्यः कुणप् जाहचौ (V-224) कर्णजाहम् कर्णमूले । कर्णस्यमूलमित्यर्थः ।

# जुक्

**तिङ्**:- **आगमः** । विधूनने अर्थे वर्तमानस्य ओ वै इति धातोः ण्यन्तात् वाजयति । विधूनन, कम्पनइत्यर्थादन्यत्र तु पुगागमः । केशान् वापयति = सुगन्धी करोति (VII-3-38).

# जुस्

1. तिङ् "झेर्जुस्" (III-4-108) लिङि भवेयुः ।

2. तिङ् :- सिचः परस्य (III-4-109) अकार्षुः । अभ्यस्तस्य (III-4-109) अबिभयुः । विदे (III-4-109) अविदुः ।
3. आतः (III-4-110) अदुः ।
4. आकारान्तस्य लङोपि । अयुः । अवुः । अद्विषुः । अन्यमते (III-4-111) अयान् अवान् ।
5. अद्विषन् (III-4-112).

## ज्ञु

तद्धितः :- आदेशः । प्रसम्भ्यां जानुनोः ज्ञुः (V-1-129) प्रज्ञुः संज्ञुः (V-1-130) ऊर्ध्वज्ञुः ।

## ज्यः

तद्धितः :- प्रशस्यइत्यर्थे ज्यायान् ज्येष्ठः । वृद्धस्याऽपि ज्यायान् (V-3-61, 62).

## झ

इत् :- चुटू (I-3-7) येषां झकार इत् ते झितः प्रत्ययाः ।

आदेशः :- अदभ्यस्तात् (VII-1-4) ददति ।

तिङ् :- आत्मनेपदि प्रथमपुरुषबहुवचने प्रत्ययः (III-4-78).

तिङ् :- "आत्मनेपदेष्वनतः" (VII-1-5) चिन्वते.

तिङ् :- आत्मनेपदि प्रथमपुरुषबहुवचनप्रत्ययस्य लिटि इरेच् इत्यादेशः । "लिटस्तझयोरेशिरेच्" (III-4-81) पेचिरे । लेभिरे ।

तिङ् :- प्रत्ययावयवस्य झस्य अन्तादेशः (VII-1-3) भू+अ+झि भवन्ति । एध-एधन्ते ।

तिङ् :- लिङादेशस्य झ (III-4-78) इत्यस्य रन् इत्यादेशः । पचेरन् (III-4-105).

## झच्

जृवशिभ्यां झच् । जरतेः वशं नः । अत्र अन्तादेशे कृते प्रत्ययस्य आद्युदात्तत्वं भवति । झचः चित्करणं अर्थवत् । चितः (VI-1-163) इति सूत्रमनुसन्धेयम् ।

## झय्

प्रत्याहारः :- "झयो होऽन्यतरस्याम्" (VIII-4-62&63).

## झर्

प्रत्याहारः :- झरो झरि (VIII-4-65).

## झल्

प्रत्याहारः :- इको झल् (I-2-9) सृजिदृशोर्झल्यमकिति (VI-I-58) "अनुनासिकस्य क्विझलोः क्ङिति" (VI-4-15) मस्जिनशोर्झलि (VII-1-60) "झलां जशोन्ते" (VIII-2-39) "झलां जश् झशि" (VIII-4-53).

## झश्

प्रत्याहारः :- झलां जश् झशि (VIII-4-53&54).

## झष्

प्रत्याहारः :- एकचो बशो भष् झषन्तस्य स्ध्वोः (VIII-2-37).

## झि

तिङ् :- लङ् । परस्मैपदबहुवचनप्रत्ययः । प्रथमपुरुषः । भू + अ + झि = भव + अन्ति । पूर्वरूपम् । भवन्ति (III-4-78).

तिङ् :- लिटि परस्मैपदानां णलतु" (III-4-82) बभूवुः ।

लिङ् :- "झेर्जुस्" (III-4-108) भवेयुः । सिचि – अकार्षुः । अभ्यस्तस्य – अजागरुः । विदेः - अविदुः (III-4-109) आत् (III-4-110) अयुः अन्यमते अयात् । लङः "शाकटायनस्यैव" (III-4-111&112) अयुः ।

## ञ

**इत्** :- चुटू (1-3-7) अचो ञ्णिति (VII-2-115) वृद्धिः । ञीतः क्तः (III-2-187) वर्तमाने क्तः । क्ष्णुणः । अत उपधायाः (VII-2-116) "तद्धितेष्वचामादेः" (VII-2-117) ञ्नित्यादिः नित्यम् (VI-1-197).

**इत्** :- धातोरुभयपदलक्षणम् "स्वरित ञितः कर्त्रभिप्राये क्रियाफले" धातोरुभयपदित्वम् । कृञ् = करोति । कुरुते (I-3-72) आदौ श्यैनम्पाता (IV-2-58).

**समासः** :- ञ प्रत्यये परे श्येन, तिल शब्दाभ्यां मुमागमः । "अरुर्द्वि (VI-3-67) भवति । श्यैनम्पाता । तिलम्पाता । ञ प्रत्ययाभावे न मुमागमः । श्येनपाता (VI-3-71). दिक्पूर्वपदादसंज्ञायां" (IV-2-107) पौर्वशालः । आपरशालः । मद्रेभ्योऽञ् (IV-2-108) पौर्वमद्रः। आपरमद्रः ।

**तद्धितः** :- घञः सास्यां क्रियेति ञः (IV-2-58) श्येनंपातो अस्यां क्रियायामिति श्यैनंपाता मृगया । तिलम्पाता अस्यां क्रियायामिति तैलंपाता स्वधा । अकारान्ते उत्स + अञ् = औत्सी (IV-1-15) टिड्ढाणञ् ।

**तद्धितः** :- मत्वर्थे मधु अस्मिन् अस्तीत्यर्थे माधवः मासः । यदपि (IV-4-129).

## ञि

वर्तमाने क्तः ञिक्ष्विदा-क्ष्विण्णः (III-2-187).

## ञिठ्

**तद्धितः** :- शेषे काश्यादिभ्यः काशिका । अत्र इकार उच्चारणार्थः। काश्यादिर्गणः (IV-2-116) अत्र ठञपि । काशिकी । स्त्रीप्रत्यये विशेषः । आपत्कालिका । तात्कालिका (वा) । वाहीकग्रामेभ्यश्च (IV-2-117) शाकलिका पञ्जाब देशः । अत्रऽपि ठञ् । शाकलिकी ।

## ञुण्

**उणादि** :- दृसनि (2) दीर्यत इति दारु ।

## ञ्यः

तद्धितः :- चातुरर्थिकः । प्रगदिन्नादिभ्यः । प्रागद्यम् । मागद्यम्

त. :- "तत्र भवः" इत्यर्थे गाम्भीर्यम् (IV-3-58) बाह्यम् । दैव्यम् । पाञ्चजन्यम् (वा) ।

त. :- अव्ययीभावात् (IV-3-59) पारिमुख्यम् ।

त. :- "प्रभवति" इत्यर्थे विदूरात् प्रभवति वैदूर्यो मणिः (IV-3-84).

त. :- "अभिजन" इत्यर्थे शण्डिको अभिजनो अस्य = शाण्डिक्यः (IV-3-92).

त. :- छन्दोगौक्थिक (IV-3-129) छान्दोग्यम् । धर्मे आम्नाये एव ञ्यः । अन्यत्र छान्दोगं कुलम् । एवं नाट्यम् ।

त. :- संयुक्ते इत्यर्थे गृहपतिना संयुक्तो अग्निः गार्हपत्यः (IV-3-90).

त. :- तदर्थे विकृतेः प्रकृतौ (V-I-12) इत्यर्थे ऋषभशब्दात् आर्षभ्यो वत्सः । एवं उपानहशब्दात् औपानह्यो मुञ्जः । औपानह्यं चर्म । (V-I-14).

त. :- तद्राजप्रत्ययः । "पूगात्ञ्ञ्योऽग्रामणीपूर्वात्" (V-3-112) लौहध्वज्यः ।लौहध्वज्यौ ।लोहध्वजाः । (V-3-112).

त. :- "व्रातच्फञोरस्त्रियाम्" (V-3-113) कुञ्जादिभ्यः च्फञ् (IV-1-98) च्फञन्तात् ञः स्वार्थे । कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः (V-3-113).

त. :- स्वार्थे । अनन्त एवानन्त्यम् । आवसथ्यम् । इति ह एव ऐतिह्यम् (V-4-23) अतिथिशब्दात् चतुर्थीसमर्थात् आतिथ्यम् (V-4-26).

## ञ्यङ्

त. :- अपत्यार्थे । कौसल्यः । वृद्धेत् (IV-1-171).

## ञ्यट्

तद्धितः :- वाहीकदेशे ये आयुधजीविनः ब्राह्मणक्षत्रियभिन्नाः तेषां सङ्घवाचिनः प्रातिपदिकात् । क्षौद्रक्यः । क्षौद्रक्यौ । क्षुद्रकाः । अत्र टकारः ङीबर्थः । क्षौद्रकी (V-3-114).

## ञ्युट्

कृत् :- कव्याद्युपपदेषु छ. वहेः धातोः ञ्युट् । कव्यवाहनः । पुरीषवाहनः (III-2-65).

कृत् :- हव्येऽनन्तः पादम् (III-2-66) हव्यवाहनः । वहधातुः पादमध्ये न भवति चेत् । दूतश्च हव्यवाहनः इत्यत्र ऋक्पादान्ते एव वहधातुः। पादमध्ये यदा वहधातुः तदाञ्युट् भवति । वहश्च (III-2-64) हव्यवाट् ।

# ट

इत् :- "चुटू" (I-3-7) टितः स्त्रियां ङीप् । टिड्ढाणञ् (IV-1-15) "टित आत्मनेपदानां टेरे" (III-4-79) एधते । आद्यन्तौ टकितौ (I-1-46) "आदिर्ञिटुडवः" (I-3-5).

कृत् :- अधिकरणे सुबन्ते उपपदे चरधातोः । कुरुचरः । मद्रचरः भिक्षाचरः (III-2-16,17) अधिकरणभिन्ने अर्थे पुरस्सरः । अग्रेसरः (III-2-18).

कृत् :- यदा तु पूर्वशब्दः कर्तृवाची तदा पूर्वसरः इति भवति । पूर्वः कर्ता । पूर्वस्थानस्थितः प्रथमः पूर्व इति सः सरति इत्यर्थे पूर्वसरः । यदा पूर्वशब्दः देशवाची तदा पूर्वं सरति इत्यर्थे पूर्वसार इति भवति (III-2-19)

कृत्:- करोति धातोः अर्थविशेषेषु

1. हेत्वर्थे –शोकहेतुभूता = शोककरी अविद्या । यशस्करी विद्या
2. ताच्छील्ये–धर्मकरः धर्मस्वभावशीलः ।
3. आनुलोम्ये-वचनकरः पुत्रः । आज्ञाकरः शिष्यः (III-2-20)

4. साधारणतः- दिवाविभादिषूपपदेषु कर्मण्यर्थे हेत्वाद्यर्थविशेष-रहिते । दिवाकरः । बहुकरः (III-2-21).

5. कर्मशब्दे उपपदे भृत्यर्थे टः । कर्मकरः (वेतनेन) भृतकः । कर्मकारः अन्यः (III-2-22).

6. हेत्वाद्यर्थविशेषेष्वपि शब्दश्लोकादिषु उपपदेषु टः न भवति । प्राप्तेऽपि प्रतिषेधः । । शब्दकारः । सूत्रकारः (III-2-23).

**उणादि** :- दंसे ष्टटनौ न आ च । दंसि धातोः नस्य आ भवति । दासः सेवकः । दशेः धीवरः इति (688-689).

**तद्धितः** :- तत्र जात इत्यर्थे "श्रविष्ठा" (IV-3-34) प्रत्ययस्य लुक् । परं अत्रैव सूत्रे "फल्गुन्याषाढ" (वा) टानौ। फल्गुनी ।

# टक्

**कृत्** :- गा, पा धातुभ्यां कर्मण्युपपदे । शक्रं गायति शक्रगः । सुरां पिबति सुरापः । टित्वात् ङीप् । शक्रगी । सुरापी (III-2-8).

**कृत्** :- जाया-पति-उपपदयोः लक्षणवति कर्तरि, विशेष गुणक्रिया-वति कर्तरि वाच्ये टक् । जायाघ्नः = जायां हन्ति । हो हन्ते र्ञ्णिन्नेषु (VII-3-54) इति हस्य घः । तथा गमहन (VI-4-98) इति उपधालोपः । जाया + (ह) घ् + न् + अ = जायाघ्नः । एवं पतिघ्नी (III-2-52).

**कृत्**:- अमनुष्यकर्तृके (III-2-53) पित्तघ्नं घृतम् ।

**कृत्**:- शक्ति विशेषे । हस्तिघ्नो वीरः । कपाटघ्नः चोरः (III-2-54).

**कृत्** :- निपाताः । पाणिघः । मार्दङ्गिकः । ताडघः शिल्पी (III-2-55).

# टच्

**समासान्तः** :-"राजाहस्सखिभ्यष्टच्" । राजन्, अहन् सखि अन्तात् तत्पुरुषात् ।

1. महान् + राजन् + टच् = महाराजः । मद्रराजः ।
 परमम् + अहन् + टच् = परमाहः । उत्तमाहः
 राजन् + सखि + टच् = राजसखः (V-4-91).
2. गो इत्यन्तात् तत्पुरुषात् तद्धितलुक् न भवति चेत् ।
 "गोरतद्धितलुकि" (V-4-92) परमश्चासौ गौश्च = परमगवः।
3. उरः शब्दः अग्र = श्रेष्ठवाची सजातीयेषु तदा सजातीयश्रेष्ठ वाची इत्यर्थे । अश्वानां प्रधानः = अश्वोरसम् । उरः प्रभुतिभ्यष्टच् (V-4-93).

**समासान्तः** :– जातौ संज्ञायां च अनस्, अयस्, अश्मन्, सरस्, एत-दन्तेभ्यः टच् । उपानसम् जातिः । महानसम् इति संज्ञा । अमृताश्म संज्ञा । लोहितायसं ताम्रम् । मण्डूकसरसम् (V-4-94).

**समासान्तः** :– ग्रामस्य तक्षन् = ग्रामतक्षः साधारणः । कुट्यां भवः कौटः । कौटतक्षः विशेषकुशलः (V-4-95).

अति + शुन् + टच् = अतिशुनः श्वानमतिक्रान्तः वराहः । सेवकः (V-4-96).

**समासान्तः** :– श्वन् शब्दः अप्राणिवाची उपमानार्थे वर्तते तदा समासान्तः टच् । आकर्षः श्वेव आकर्षश्वः । फलकश्वः (V-4-97).

**समासान्तः** :– उत्तरं सक्थ्नः उत्तरसक्थम् । मृगसक्थम् । उपमानादपि । फलकमिव सक्थि = फलकसक्थम् । (V-4-98).

**समासान्तः**:- नौ शब्दान्तात् दिगुसमासात् टच् = द्विनावम् । पञ्च-नावम् । अर्द्धनावम् (V-4-99-100).

**समासान्तः**:- खारी शाब्दान्तात् प्राचां मतेन । द्विखारम् पक्षे द्विखारि (V-4-101).

**समासान्तः**:– द्वित्रिभ्यां परो यो अञ्जलिशब्दः तस्मात् । द्व्यञ्जलम् । त्र्यञ्जलम् (V-4-102).

**समासान्तः**-अन्नन्तात् असन्तात् टच् छंदसि। चर्मन्। अन्नन्तात् - हस्ति चर्मे जुहोति। ऋषभ चर्मे जुहोति। असन्तात्-देवच्छन्दसानि। मनुष्यच्छन्दसानि (V-4-103).

जानपदाख्यायां तद्देशभव इत्याख्यायां ब्रह्मन्शब्दान्तात् टच्। सूराष्ट्रब्रह्मः सुराष्ट्रदेशे भवः ब्रह्मा। कु महत् शब्दाभ्यां ब्रह्मन् शब्दात् वा। कुब्रह्मः - कुब्रह्मा। महाब्रह्मः-महाब्रह्मा (V-4-104,105).

**समासान्तः** :- समाहारद्वन्द्वे

1. चवर्गान्तात् - वाक् च त्वक् च = वाक्त्वचम्। श्रीश्च स्रक् च श्रीस्रजम्।
2. दकारान्तात्-समिच्च दृषद् च = समिदृषदम्। सम्पच्च विपच्च सम्पद्विपदम्।
3. षकारान्तात् - वाक् च विप्रुट् च = वाग्विप्रुषम्।
4. हकारान्तात् - छत्रोपानहम् (V-4-106).

अव्ययी भावे शरत् प्रभृतिभ्यः। उपशरदम् शरत्समीपम्। उपविपाशम्। उपगङ्गम् (V-4-107).

**समासान्तः** :- अन्नन्तात्-राज्ञः समीपं उपराजम्। अध्यात्मम्। प्रत्यात्मम् (V-4-108) अन्नन्तात् नपुंसकात् वा। प्रतिचर्मम्–प्रतिचर्म। उपचर्मम्–उपचर्म (V-4-109).

**समासान्तः** :- नदीशब्दात् वा। उपनदि–उपनदम्। उपपौर्णमासम्-उपपौर्णमासि। उपाग्रहायणम् - उपाग्राहायणि (V-4-110).

**समासान्तः** :- झयन्तात् अव्ययीभावात् वा टच्। उपसमिधम्। उपसमित्। उपदृषदम्। उपदृषत् (V-4-111).

**समासान्तः** - गिरिशब्दात् अव्ययीभावात् टच् सेनकमतेन। उपगिरम् - उपगिरि।

## टन्

उणादि :- जनेष्टन् लोपश्च । जटा (708).

उणादि :- दसेष्टनौ न आ च । दासः (688).

दंशेश्च । दाशः धीवरः (689)

## टा

सुप् :- टाभ्यां भिस् (IV-1-2).

## टाप्

स्त्री :- अजाद्यतष्टाप् (IV-1-4) अजा । कमला ।

## टि

संज्ञा :- "अचोऽन्त्यादि टि" (I-1-64).

## टिठन्

तद्धितः :- श्राणा = पक्वं मुद्गान्नं, मांसौदनं । वेतनरूपेण यस्मै दीयते सः श्राणिकः मांसौदनिकः । टित्वात् ङीप् । श्राणिकी । मांसौदनिकी ठस्येकः (IV-4-67).

तद्धितः :- "अर्हीयः" इत्यर्थे । कंसेन क्रीतः कंसिकः । कंसिकी (V-1-25) आर्द्धिकः । आर्द्धिकी । कार्षापणिकः (वा).

## टिषच्

उणादि :- अविमह्योः । अविषः । महिषः (45).

## टीटच्

तद्धितः :- नते नासिकायाः संज्ञायां । अवटीटः नतनासिकः (V-2-31).

## टु

येषां धातूनां "टु" इति इत्संज्ञा तेषां कर्तृभिन्ने कारके भावे च अथुच्

भवति । ट्वितोऽथुच् । वेपथुः । श्वयथुः । (III-3-89).

**संज्ञा** :– टवर्गसंज्ञा "ष्टुना ष्टुः (VIII-4-41 to-44)

# टुक्

**आगमः** :– "ङ्णोः कुक्टुक् शरि" (VIII-3-28) सुगण् षष्ठः, सुगण्ट्षष्ठः ।

# टेण्यण्

**तद्धितः** :– आयुधजीविसङ्घवाचिनः वृकप्रातिपदिकात् स्वार्थे वार्केण्यः वार्केण्यौ वृकेण्याः (V-3-115)

# टयण्

प्रथमासमर्थदेवतावाचिनः सोमप्रातिपदिकात् । सोमो देवता अस्य सौम्यं हविः (IV-2-30).

# टयु

**तद्धितः**– सायमादिभ्यः अव्ययेभ्यश्च तुडागमश्च ।

# टयुल्

**तद्धितः** :– सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । अव्ययेभ्यः - दिवातनम् । दोषातनम् । विभाषा पूर्वाह्णेतनम् । पौर्वाह्णिकम् । अपराह्णेतनम् आपराह्णिकम् । तुडागामः (IV-3-23-24) युवोरनाकौ = अन + तुट् = तन सायन्तनी मूर्तिः ।

### टलञ्

**तद्धितः** :– शम्याः विकारः शामीलं भस्म ।
शम्या अवयवे शामिली स्रुक् (IV-3-142).

# ठ

**इत्** :– चुटू (I-3-7) ठादिप्रत्ययाः ।

ठक् ठच् ठञ्, ठन् इत्यादय: । चछत्रो: शूडनुनासिके च (VI-4-19) ठित्करणं एत्येधत्यूठ्सु (VI-1-89) विशेषणार्थम् ।

इत् :– ठस्येक: (VII-3-50) अङ्गस्य निमित्तं प्रत्यय: । प्रत्ययठस्य इकादेश: । आक्षिक: । शालाकिक: ।

इत् :– "ठाजादा" (V-3-83&84)

इस् उस् उक् त इत्यन्तानां तु ठस्य इक् आदेशस्थाने क इत्येव भवति । सार्पिष्क: । धानुष्क: । पैतृकम् । औदश्वित्क: । मथितं पण्यमस्य मार्तिथिकं इत्यत्र तु "यस्येति च" (VI-4-148) इति अकारलोपे तस्य स्थानिवद्भावात् इक: स्थाने क एव (VII-3-51).

# ठक्

**उणादि** :– कणे: ठ: = कण्ठ: (103).

**तद्धित:** :– अपत्यार्थे । रैवतिक: । रेवत्यादिभ्यष्ठक् (IV-1-146).

**तद्धित:** :– गोत्रस्त्रिया: कुत्सने ग्लौचुकायनी । गोत्रस्त्री वाची शब्द: ग्लुचुक इत्यस्मात् गोत्रप्रत्यय: फिन् "प्राचामवृद्धात्" (IV-1-160) अपत्यं पौत्रप्रभृति गोत्रम् । इतो मनुष्यजाते: (IV-1-65) ङीष् । ग्लौचुकायनी । अपत्यार्थे ठक् । ग्लौचुकायनिक: । पिता न ज्ञायते मातुर्नाम्नैव प्रसिद्ध इति कुत्सा । णप्रत्ययोऽपि (IV-1-147).

**तद्धित:** :– वृद्धसंज्ञकात् प्रातिपदिकात् सौवीरगोत्रापत्ये कुत्सायां विकल्पेन ठक् । भागवित्ते: गोत्रापत्यं भागवित्तिक: जाल्म: । पक्षे यञि-ञोश्च (IV-I-101) इति फक् । भागवित्तायन: (IV-1-148).

**तद्धित:** :– फिञन्तात् प्रातिपदिकात् वृद्धसंज्ञकात् सौवीरगोत्रात् कुत्सने यमुन्दस्यापत्यं यामुन्दायनि: । तस्यापत्यं यामुन्दायनिक: कुत्सायाम् छ च (IV–1–149).

**तद्धित:** :– लाक्षया रक्तं वस्त्रं लाक्षिकम् (IV-2-2).

**तद्धित:** :– संस्कृतं भक्षा: (IV-2-16) इत्यर्थे सत उत्कर्षाधान

संस्कारः । दधिशब्दात् संस्कृतमित्यर्थे दाधिकम् । अत्र दधि केवल-माधारभूतम् । लवणादिना संस्कारः प्रभूतं दध्येव (IV-2-18) संस्कृतम् (IV-4-3).

**तद्धितः** :- उदश्वति संस्कृतम् = औदश्वित्कम् (IV-2-19).

**तद्धितः** :- अस्मिन् पक्षे पौर्णमासी इत्यर्थे आग्रहायणी यस्यां पौर्ण-मस्यां सा अस्मिन् मासे इति आग्रहायणिकः मासः । एवं आश्वत्थिकः मासः अश्वत्थ इति अश्विनीनक्षत्रसंज्ञा (IV–2–22).

**तद्धितः** :- फल्गुणी श्रवणा कार्तिकी चैत्रीभ्यः वा । फाल्गुनिकः । कार्तिकिकः पक्षे अण् फाल्गुनो मासः (IV-2-23).

**तद्धितः** :- तस्य समूहः (IV-2-37) इत्यर्थे हास्तिकम् । धैनुकम् । अचित्तार्थेभ्यः अप्राणिवाचिभ्यः अपूपानां समूहो आपूपिकम् (IV-2-47).

**तद्धितः** :- "तदधीते तद्वेद" इत्यर्थे क्रतुवाचकात् आश्वमेधिकः । उक्थात् = औक्थिक्कः । सूत्रान्तशब्दात् श्रौतसूत्रिकः (IV-2-60).

**तद्धितः** :- वसन्तः ऋतुः तत्सहचरितः ऋतुवर्णनपरं ग्रन्थं अधीते तु वासन्तिकः । वसन्तादिर्गणः । तस्मत् ठक् (IV-2-63).

**तद्धितः** :- ठक् प्रत्ययस्य लुक् । अध्येतृ -वेदितृवात् "प्रोक्ताल्लुक्" (IV-2-64) "सूत्राच्च कोपधात्" (IV-2-65).

छन्दोब्राह्मणानि च तद्विषयाणि (IV-2-66).

**तद्धित** :- चातुर्थिकः । कुमुदादिभ्यः ठक् = कौमुदिकम् (IV-2-80).

**तद्धितः** :- जनपदे चातुर्थिकस्य (ठक् प्रत्ययस्यऽपि) लुपः । अङ्गाः । वङ्गाः (IV-2-81).

**तद्धितः** :- वरणादिभ्यश्चाऽपि लुक् । वरणानामदूरभवो ग्रामः वरणाः (IV-2-82).

**तद्धितः** :- शर्कराशब्दात् ठक् प्रत्ययस्य वा लुक् । शर्करा अस्मिन् देशे इति वाच्ये ठकि, शार्करिकः । ठको लुपि शर्कराः । लोपविकल्पमहिम्ना

शर्कराशब्दस्य कुमुदगणपठितत्वात् (IV-2-80) टच् तेन शर्करिकः। औत्सर्गिके अणि शार्करः। छस्य विधानात् (IV-2-84) शर्करीयः इत्यपि।

**तद्धितः** :– "कन्था" प्रातिपदिकात् चातुरर्थिकः =कान्थिकः (IV-2-102).

**तद्धितः** :– भवत् शब्दात् चातुरर्थिकः ठक्। भवत् इत्यस्य वृद्धसंज्ञा "त्यदादीनि" (I-1-73) भवत् इत्यस्य तान्तत्वात् ठक् इत्यस्य "क" इत्येवादेशः। इसुसु" (VII-3-51) तेन भावत्कः। छोऽपि। भवदीयः (IV-2-115)

**तद्धितः** :– ऋतुवाचिनो नित्यबहुवचनवर्षाप्रातिपदिकः चातुरर्थः वर्षा+ठक् = वार्षिकमनुलेपनम्। वर्षाकालयोग्यम् (IV-3-18).

**तद्धितः** :– "प्रायभव" इत्यर्थे (IV-3-39) उपजानु+ठक् = औपजानुकः। उपकर्ण+ठक् = औपकर्णिकः। उपजानु+ठक्, "इसुस्" (VII-3-51) इति क एव = औपजानुकः (IV-3-49).

**तद्धितः** :– द्व्यचः शब्दा ऋकारान्ताः ऋक् प्रथम इत्यादयः शब्दाः तेभ्यः तस्य व्याख्याने इति च व्याख्यातव्यनाम्नः (IV-3-66) ठक्। वेद-व्याख्या। वैदिकचतुर्होतृग्रन्थव्याख्या चातुर्होतृकः (IV-3-72).

**तद्धितः** :– "तत आगत" इत्यर्थे (IV-3-74) आयस्थानात् आगतः शौल्कशालिकः Custom House (IV-3-75).

**तद्धितः** :– "भक्ति" इत्यर्थे (IV-3-95) अपूपा भक्तिरस्य आपूपिकः (IV-3-96).

**तद्धितः** :– तस्येदमित्यर्थे (IV-3-120) "हलसीरात् ठक्" (IV-3-124) हालिकम्। सैरिकम्"।

इतः पूर्वं अण् औत्सर्गिकः प्रत्ययः आसीत् "प्राक् दीव्यतोऽण् (IV-1-83) इत्यारभ्य "तेन दीव्यति खनति जयति जितम्" (IV-4-2) इत्यन्तम्। अधुना ठक् प्रत्यय एवौत्सर्गिकत्वेन विधीयते प्राग्वहते (IV-4-1)

**तद्धितः** :– तेन दीव्यतीत्यर्थे अक्षैर्दीव्यति आक्षिकः (IV-4--2).

**तद्धितः** :– तेन खनति, कुद्दालेन खनति = कौद्दालिकः (IV-4-2).

तद्धितः :– तेन जयति। अक्षैः जयति आक्षिकः (IV-4-2).

तद्धितः :– अक्षैर्जितम् = आक्षिकम् (IV-4-2).

तद्धितः :-"संस्कृतं इत्यर्थे दध्ना संस्कृतम् दाधिकम्। इदं "संस्कृतं भक्षाः (IV-2-16) इत्यस्मात् भिन्नम्। इह संस्कारमात्रं दधि (IV-4-3).

तद्धितः :– "तरति" इत्यर्थे उडुपेन तरति औडुपिकः (IV-4-5).

त· :– "चरति" गतिभक्षणयोः। शकटेन चरति शाकटिकः। दध्ना अन्नं भक्षयति दाधिकः (IV-4-8).

तद्धितः :– वेतनेन जीवति वैतनिकः (IV-4 12).

तद्धितः :- "हरति" स्थानान्तरं प्रापयति उत्सङ्गेन शिशुं। स्थानान्तरं प्रापयति – औत्सङ्गिकः (IV-4-15).

तद्धितः :– विवधेन (कावडी) हरति इत्यत्र विभषा वैवधिकः "किति च" (VII-2-118) वृद्धिः। पक्षे ठन् विवधिकः। अत्र वृद्धिः न (IV-4-17).

तद्धितः :–अक्षद्यूतादिभ्यः निर्वृत्ते। आक्षद्यूतिकम् वैरम् (IV-4-19).

तद्धितः :- "संसृष्टे" दध्ना संसृष्टं दाधिकम्,। मारिचिकम् (IV-4-22).

तद्धितः :– "वर्तते" इत्यर्थे शब्दविशेषैः· ओजसा वर्तते शूरः औजसिकः। अम्भसा वर्तते आम्भसिकः मत्स्यः। सहसा वर्तते साहसिकः चोरः (IV-4-27).

तद्धितः :– प्रति + ईपम्। प्रतीपं वर्तते प्रातीपिकः।
अनु + लोमं। अनुलोमं वर्तते आनुलोमिकः।
अनु + कूलं। आनुकूलिकः। प्रातिकूलिकः। पारिमुखिकः (IV-4-28,29).

तद्धितः :–"प्रयच्छति गर्ह्यम्" इत्यर्थे। द्विगुणं प्रयच्छति। द्विगुणं धनप्राप्त्यर्थं यः प्रयच्छति सः द्वैगुणिकः गार्ह्यः (IV-4-30).

तद्धितः "उञ्छति" इत्यर्थे । गोधूमानुञ्छति गौधूमिकः । कणान् उञ्छति काणिकः (IV-4-32).

तद्धितः :- "रक्षति" इत्यर्थे । समाजं रक्षति सामाजिकः ।
कुटुम्बं करोति = कौटुम्बिकः (IV-4-33).

तद्धितः :- शब्दं करोति शाब्दिकः वैयाकरणः (IV-4-34).
दर्दुरं करोति दार्दुरिकः कुम्भकारः .(V-4-34)

तद्धितः हन्तीत्यर्थे । पक्षिणो हन्ति पाक्षिकः । मृगान् हन्ति मार्गिकः (IV-4-35).

तद्धितः परिपन्थं तिष्ठति, हन्ति च इत्यर्थे पारिपन्थिकः चौरः (IV-4-36).

तद्धितः 1 धावतीत्यर्थे माथोत्तरपदात् । माथः मार्गः । विद्या माथं धावति वैद्यामाथिकः ।

2. पदवीं धावति पादविकः ।

3. अनुपदं धावति आनुपदविकः (IV-4-37).

4. आक्रन्दः शरणस्थानं धावति आक्रन्दिकः (IV-4-38).

तद्धितः :- गृह्णाति इत्यर्थे पूर्वपदं गृह्णाति पौर्वपदिकः,
एवं औत्तरपदिकः (IV-4-39) प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः, । अर्थं गृह्णाति आर्थिकः । ललामं गृह्णाति लालामिकः (IV-4-40).

तद्धितः :- चरति इत्यर्थे । धर्मं चरतिधार्मिकः (IV-4-41).
प्रतिपथमेति = प्रातिपथिकः (IV-4-42) अत्र ठन् च प्रतिपथिकः ।

तद्धितः :- समवायान् समवैति इत्यर्थे सामवायिकः । सामाजिकः । समाजावयवो भवति (IV-4-43).

तद्धितः :- ललाटं पश्यति लालाटिकः भृत्यः । कार्यं न करोति केवलं मुखं पश्यति इत्यर्थे । कुक्कुटं पश्यति कौक्कुटिकः भिक्षुः अविक्षिप्तदृष्टिः चक्षुः संयम्य गच्छति (IV-4-46).

**तद्धितः** :- धर्म्यं न्याय्यं इत्यर्थे ठक् । हाटकस्य धर्म्यं हाटकिकम (IV-4-47).

**तद्धितः** :- अवक्रय इत्यर्थे । इच्छया नियतद्रव्येण नियतकालाय द्रव्यस्यानयनम् । शुल्कशालाया अवक्रयः शौल्कशालिकः (IV-4-50).

**तद्धितः** :- "तदस्य पण्यम्" (IV-4-51) इत्यर्थे आपूपिकः अस्य अपूपाः पण्यम् ।

**तद्धितः** :- "तदस्य शिल्पम्" (IV-4-55) मृदङ्गः शिल्पं अस्य मार्दङ्गिकः । वैणिकः । पाणविकः ।

**तद्धितः** :- "तदस्य प्रहरणम्" (IV-4-57) आसिकः । दाण्डिकः । चाक्रिकः । पारश्वधिकः (IV-4-58).

**तद्धितः** :- तस्य मतिः बुद्धिरित्यर्थे "अस्ति" प्रातिपदिकात् आस्तिकः । नास्ति प्रातिपदिकात् नास्तिकः । द्विष्टप्रातिपदिकात् द्वैष्टिकः । दैविकः (IV-4-60).

**तद्धितः** :- शीलमस्य इत्यर्थे । अपूपभक्षणं शीलमस्य आपूपिकः (IV-4-61).

**तद्धितः** :- अध्ययने परीक्षासमये "कर्मवृत्तं" इत्यर्थकसमानाधिकरणात् शब्दात् ठक् । एकमन्यत् अध्ययने कर्मवृत्तं (एकः दोषः इत्यर्थे) ऐकान्यिकः । द्वे स्खालित्ये यस्य द्वैयन्यिकः । अत्र "न य्वाभ्यां" (VII-3-3) इति ऐजागमः (IV-4-63).

**तद्धितः** :- हितं भक्षाः इत्यर्थे । आपूपिकः । अपूपभक्षणं हितमस्मै (IV-4-65).

**तद्धितः** :- नियुक्तभोजनमस्मै दीयते इत्यर्थे आग्रभोजनिकः । आपूपिकः । (IV-4-66).

**तद्धितः** :- नियुक्तं भक्तमस्मै दीयते भाक्तिकः । अण् अपि भाक्तः (IV-4-68).

**तद्धितः** :– तत्र नियुक्तः इत्यर्थे। शुल्कशालायां नियुक्त इत्यर्थे शौल्कशालिकः (IV-4-69).

**तद्धितः** :– आदेशे अकाले अध्ययनं करोति इत्यर्थे ठक् । श्मशानेऽधीते इत्यर्थे श्माशानिकः। पौर्णमासिकः (IV-4.71).

**तद्धितः** :–व्यवहरति इत्यर्थे सप्तमीसमर्थात् (1) कठिनान्तात् (2) प्रस्तार (3) संस्थानप्रातिपदिकात् । वंशकठिनः। यस्मिन् देशे कठिना वंशा भवन्ति तत्र व्यापारं करोति वांशकठिनिकः ।

प्रस्तारः पर्णशय्या । तृणभूयिष्ठो देशः । तत्र व्यापारं करोति प्रास्तारिकः । एवं सांस्थानिकः। चतुष्पथे यः व्यवहारं करोति(IV-4-72).

**तद्धितः** :–निकटे वसति इत्यर्थे । योगिनो ब्रह्मचारिणश्च ग्रामात् दूरनिवासे यः नियमः तदपेक्षया ग्रामनिकटे वसति इत्यर्थे नैकटिकः (IV-4-73).

**तिद्धतः** :–तद्वहति इत्यर्थे हलं वहति हालिकः (IV-4-81).

**तद्धितः** :–तत्र साधुः कथायां साधुः काथिकः (IV-4-102).

**तद्धितः** :–"तेन क्रीतं" (V-I-37) इत्यर्थे प्राग्वतेः ठञ् (V-1-18) इति ठञ् विहितः । "आर्हाद" (V-1-19) इति ठगपि । निष्केन क्रीतं नैष्किकम् । ठक् ठञोः स्वरे विशेषः। एवं असमासे निष्कादिभ्यः ठक् एव । निष्केन क्रीतं नैष्ककम् । समासे तु ठञेव भवति (V-1-20).

**तद्धितः** :– तदर्हतीत्यर्थे छेदादिभ्यः । छेदमर्हति छैदिकः (V-1-64).

**तद्धितः** :–शीर्षच्छेदमर्हति शैर्षच्छेदिकः । अत्र यदपि । शीर्षछेद्यः (V-1-65).

**तद्धितः** :- आद्यूने (खादाड) उदरात् औदरिकः (V-2-67).

**तद्धितः** :– अन्विच्छति कुटिलोपायेन दव्यमर्जयति इत्यर्थे अयः शूलशब्दात् । आयःशूलिकः तीक्ष्णोपयेनेति (V-2-76).

**तद्धितः** :– इवे प्रतिकृतौ (V-3-96) इत्यर्थे अङ्गुलीव आङ्गुलिकः (V-3-108).

**तद्धितः** :– एकशालाशब्दात् इवार्थे। ऐकशालिकः। पक्षे ठच्। एक- शालिकः (V-3-109).

**तद्धितः** :– स्वार्थे। विनय एव वैनयिकः।

**तद्धितः** :– वाचो व्याहृतार्थायाम्। वाचिकम् (IV-4-35).

## ठच्

**तद्धितः** :– चातुरर्थिकः। कुमुदादिभ्यः कुमुदिकः (IV-2-80).

**तद्धितः** :– अनुकम्पायां (V-3-76) नीतौ चानुकम्पायुक्तात् (V-3-77) द्वयोरर्थयोः बह्वचः मनुष्यनाम्नः वा ठच्। ठचि "ठाजादावूर्ध्वं (V-3-83) इति द्वितीया चः। परभागस्य लोपः। देवदत्त+ठच्। ठस्येकः। दत्त इत्यस्य लोपः। देविकः अनुकम्पायाम्। पक्षे कन् देवदत्तकः। अन्ये च प्रत्ययाः (V--3-78,79,80).

**तद्धितः** :– इवार्थे एकशालिकः एकशालेव। अल्पगृह इत्यर्थे पक्षे ठक् (V-3-109).

## ठञ्

**तद्धितः** :– ञित्वात् वृद्धिः। सास्य देवता (IV-2-24) इत्यर्थे महा- राजप्रोष्ठपदात्। माहाराजिकः। प्रौष्ठपदिकः (IV-2-35).

**तद्धितः** :– तस्य समूहः (IV-2-37) इत्यर्थे। कवचिनां समूहः कावचि- कम् (IV-2-41).

**त॰** :– शेषे (IV-2-92) काश्यादिभ्यः काशिकी। ञिठ् च। ञिठ् पक्षे काशिका "टिड्ढाणञ्" (IV-1-15) अयमेव ठञ् ञिठो भेदः (IV-2-116).

**तद्धितः** :– शेषे वाहीकग्रामेभ्यः। शाकलिकी। ञिठपि (IV-2-117).

**तद्धितः** :– उशीनरदेशे ये वाहीकग्रामाः तेभ्यः। आह्वजालिका (IV-2-118).

**तद्धितः** :– उकारान्त देशवाचिभ्यः । शाबरजम्बूदेशः । तस्मात् शेषे शाबरजम्बुकः (IV-2–119).

**त** :– प्राक् देशवाचिनः उवर्णान्तात् वृद्धसंज्ञकात् शाकजम्बुकः (IV-2.120).

**त** :– शेषे । दिक्पूर्वपदात् अर्थान्तात् = पौर्वार्द्धिकः । दाक्षिणार्द्धिकः । यदपि (IV-3-6).

**त** :– शेषे । दिक्पूर्वपदात् अर्थान्तात् ग्रामैकदेशवाचिनः जनपदैकदेशवाचिनः । इमे ग्रामस्य पौर्वार्थाः (IV-3-7).

**त** :– शषे । कालविशेषवाचिनः शब्दात् । मासे भवः मासिकः (IV-3-11).

**त** :– श्राद्धे वाच्ये । शरदि भवं श्राद्धं शारदिकम् (IV-3-12)

**त** :– रोगे अभिधेये शारदिको रोगः । पक्षे अण् ।

**त** :– आतपे अभिधेये ग्रैष्मः आतपः (IV-3-13).

**त** :– शेषे । निशाप्रदोषवाचिभ्यां । नैशिकम् । प्रादोषिकम् । पक्षे अण् (IV-3-14).

**त** :– कालविशेषवाचिनः श्वसः तुडागमः । शौवस्तिकः । अत्र पक्षे विकल्पेन ऐषमोह्यःश्वसो (IV-2.105) इति त्यप् । श्वस्त्यः । "सायञ्चिरं" (IV-3-23) इति ट्युट्युलौ । श्वस्तनः । एवं त्रैरूप्यम् (IV-3-15).

**त** :– वर्षाप्रातिपदिकात् छ· नभश्च नभस्यश्च वार्षिकौ ऋतू (IV-3-19).

**त** :– छ· मधुश्च माधवश्च वासन्तिकौ (IV-3-20).

**त** :– छ· सहश्च सहस्यश्च हैमन्तिकौ ऋतू (IV-3-21).

**त** :– देयं ऋणे (IV-3-47) इत्यर्थे संवत्सर आग्रहायणी शब्दाभ्यां सांवत्सरिकम् । आग्रहायणिकं देयं ऋणम् । पक्षे वुञ् (IV-3-50).

**त** :– व्याहरति मृग: (IV-3-51) नैशिक: मृग: । प्रादोषिक: मृग: सिंहादि । अत्र निशा प्रदोषाभ्यां (IV-3-14) इति ठञ् विकल्प: पक्षे अण् । नैश: ।

**त** :– तदस्य सोढम् निशासहचरितं अध्ययनं सोढमस्य नैशिक: (IV-3-52)

**त** :– तत्र भव इत्यर्थे (IV-3-51) अत: पूर्वपदादव्ययीभावात् आन्तर्वेश्मिकम् (IV-3-60).

**त** :– ग्रामात् पर्यनुपूर्वात् । पारिग्रामिक: (IV-3-61).

**त** :– व्याख्यातव्यनाम्न: (IV-3-66).

**त** :– अन्तोदात्तो य: बह्वच्शब्द: तस्मात् । षत्वणत्वयो: समासे (VI-1-217) इति अन्तोदात्तत्वं षात्वनत्विक: ग्रन्थ: । अयं बह्वच् (IV-3-67).

**त** :– व्याख्यातव्यक्रतुनाम्न: । अग्निष्टोमस्य व्याख्यानो ग्रन्थ: आग्निष्टोमिक: । व्याख्यातव्य यज्ञनाम्नोऽपि । पाकयज्ञिक: (IV-3-68).

**तद्धित:** :– ऋषिशब्देन तत्कृत: ग्रन्थ: अभिधीयते । भवार्थे वा व्याख्यानार्थे वा तस्मात् अध्याये वाच्चे एव ठञ् । वाशिष्ठिको अध्याय:। वशिष्ठप्रोक्तवाशिष्ठग्रन्थस्य व्याख्यानो वा वाशिष्ठग्रन्थ भवो वा अध्याय: । अध्यायादन्यत्र तु न । वाशिष्ठी ऋक् (IV-3-69).

**त.** :– तत आगत: (IV-3-74) इत्यर्थे ऋकारान्तप्रातिपदिकात् विद्यायोनिसम्बन्धात् होतुरागत: हौतृकम् । भ्रातृकम् । स्वासृकम् (IV-3-78) पितुर्यच्च । पैतृकम् । पित्र्यम् (IV-3-79).

**त.** :– भक्ति: इत्यर्थे (IV-3-95) महाराज शब्दात् । महाराज: भक्ति:, अस्य इत्यर्थे माहाराजिक: (IV-3-97).

**त.** :– तरति इत्यर्थे । गोपुच्छेन तरति गौपुच्छिक: (IV-4-6).

त· :- चरति (IV-4-8) इत्यर्थे श्वगणेन चरति श्वागणिकः । ठनपि श्वगणिकः (IV-4-11).

त· :- आक्रन्दशब्दात् धावतीत्यर्थे । आक्रन्दिकः । ठक् वा । स्वरे भेदः (IV-4-38).

त. :- तदस्य पण्यमित्यर्थे (IV-4-51) लवणशब्दात् लावणिकः (VI-4-52).

त. :- प्रहरणमित्यर्थे (IV-4-57) परश्वधात् (परशुः) पारश्वधिकः (IV-4-58).

त· :- बह्वच् पूर्वपदात् ठञ् भवति कर्माध्ययने वृत्तमित्यर्थे (IV-4-63) द्वादशान्यानि कर्माणि अध्ययने वृत्तानि द्वादशान्यिकः(IV-4-64).

त. :- तत्र साधुरित्यर्थे (IV-4-98) गुडप्रातिपदिकात् । गुडे साधुः गौडिकः इक्षुः । कौल्माषिको मुद्गः (IV-4-103) कुल्माषः अर्धपक्वः । स एव साधुः भोजनाय ।

त. :- परिमाणार्थे अध्यर्थपूर्वात् (V-1-58) इति यत् प्रत्ययस्य लुक् यदयं "पणपाद" (V-I-34)इत्यनेन ठञः अपवादः। तेन ठञोऽपि लुक्। शाणः परिमाणः = द्विशाणं । आर्हादिगो (V-1-19) इति अर्हादेः ठञ् ।

त. :- तत्र विहितः (V-1-43) इत्यर्थे लोक सर्वलोक इति शब्दाभ्याम् लौकिकम्। सार्वलौकिकः (V-1-44).

त. :- तस्य वापः(V-1-45)इत्यर्थे । प्रस्थपरिमाणो बीजवापः यस्मिन् क्षेत्रे तत् प्रास्थिकम् ।

त· :- सम्भवति इत्यर्थे आढकं सम्भवति अस्मिन् आढकिकी (V-1-53).

त· :- अवहरति आढकम् आढकिकः (V-1-53).

त· :- पचति आढकिकम् (V-1-53). एष्वर्थेषु पक्षे खः ।

त· :– तदस्य परिमाणं (V-1-57) इत्यर्थे प्रस्थं परिमाणमस्य प्रास्थिको राशिः । अन्ये च प्रत्यया भवन्ति ।

त· :– "वर्तयति" (V-1-72) इत्यर्थे पारायणं वर्तयति पारायणिकः। तुरायणं व्रतविशेषः। तत् वर्तयति तौरायणिकः ।

त· :– आपन्नः (V-1-73) इत्यर्थे संशयमापन्नः सांशयिकः ।

त· :– गच्छति (V-1-74) इत्यर्थे योजनं गच्छति यौजनिकः(V-1-74).

त· :– उत्तर पथेन गच्छति = औत्तरपथिकः (V-1-77).

त· :– तेन निर्वृत्तम् (V-1-79) इत्यर्थे तेन = कालेन (V-1-78) अह्ना निर्वृत्तं आह्निकम् । मुहूर्तेन निर्वृत्तं = मौहूर्तिकम् भोजनम् ।

त· :– तं कालं अधीष्टो भृतो भूतो भावी ।

1. मासमधीष्टः सत्कारपूर्वकं नियुक्तः मासिकः ।
   अध्यापकः । पौराणिकः (V-1-80).

2. मासं भृतः । मासिकः कर्मकरः (V-1-80),

3. मासं भूतः मासिकः व्याधिः (V-1-80).

4. मासं भावी मासिकः उत्सवः (V-1-80).

त· :– षण्मासशब्दात् भूते वयसि अभिधेये = षाण्मासिकः । पक्षे ण्यदादयः (V-1-83).

त· :– समा शब्दान्तात् द्विगुसमासात् अधीष्ट भृत इत्याद्यर्थेषु द्वैमासिकः । खोऽपि । द्विसांवत्सरिकः (V-1-86,87).

त· :– वर्षान्तात् द्विगोः ठञः लुग्वा । द्विवार्षिकः। द्विवर्षः वा व्याधिः (V-1-88).

त· :– तेन परिजय्य, लभ्य, कार्य, सुकरं एष्वर्थेषु ।

1. मासेन परिजय्यः शक्यते जेतुं व्याधिः मासिकः (V-1-93).

2. मासेन लभ्यं (वेतनं) मासिकम् (V-1-93).

3. मासेन कार्यं मासिकम् चान्द्रायणम् (V-1-93).

4. मासेन सुकर: मासिक: प्रासाद: (V-1-93).

तद्धित: :– "तदस्य ब्रह्मचर्यं (V-1-94) इत्यर्थे मासिकं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी ।

**तद्धित:** :– तदस्य दक्षिणा इत्यर्थे। अग्निष्टोमस्य दक्षिणा। इयं आग्नि-ष्टोमिकी (V-1-95).

**समास:** :– कालो दीयते इत्यर्थे। काले कार्यमित्यर्थे ठञ्। मासे दीयते मासिकम्। तथा मासे कार्यं मासिकम् (V-1-96).

अत्र विशेष: भववत् अन्येऽपि प्रत्यया: । तत्रभव: (IV-3-53) इत्यत्र भवार्थे प्रातिपदिकविशेषात् यथा अन्ये प्रत्यया भवन्ति तथा अत्राऽपि संवत्सरात्:। सांवत्सरिकम्। प्रावृट्शब्दात् प्रावृषेण्यम्। हैमन्तं हैमन्तिकं वा ।

**तद्धित:** :– सम्पादिनि अर्थे शोभां प्रापितमित्यर्थे कर्णवेष्टकं कर्ण कुण्डलम्। कर्णकुण्डलाभ्यां शोभितं मुखं कार्णवेष्टकिकम्। वास्त्रयुग्मिकं (V-1-99).

**त.** :– "तस्मै प्रभवति" (V-1-101). संन्तापाय प्रभवति सान्तापिक:। योगाय प्रभवति यौगिक: । यत् अपि । योग्य: (V-1-102).

**त.** :– समयस्तदस्य प्राप्तं (V-1-014) समय: प्राप्त: अस्य साम-यिकम् कार्यम् ।

**त.** :– प्रकृष्टे दीर्घे वर्तमानात् कालशब्दात् कालिकं वैरम् दीर्घ-वैरम्। कालिकम् ऋणम्। प्राचीनं ऋणम् (V-1-108).

**त.** :– प्रयोजनं (V-1-109) इत्यर्थे । इन्द्रमह: उत्सवविशेष: प्रयोजन-

मस्य ऐन्द्रमहिकं द्रव्यम् । वितण्डा प्रयोजनमस्य वैतण्डिकः वादी । धर्मप्रयोजनमस्य धार्मिकः । परीक्षा प्रयोजनमस्य पारीक्षिकः (V-1-109).

**तद्धितः** :- अन्विच्छति कुटिलोपायन द्रव्यमर्जयति इत्यर्थे । दण्डश्च अजिनं च दण्डाजिनं । तेन कुटिलोपायेन दाण्डाजनिकः । दाम्भिकः इत्यर्थः (V-2-76).

**तद्धितः** :- मत्वर्थे (V-2-94) एक गोपूर्वात् द्वन्द्वगर्भ बहुव्रीहेः । एक-शतमस्य अस्ति इति ऐकशतिकः । गोसहस्रमस्येति गौसहस्रिकः । निष्कशतमस्यास्तीति नैष्कशतिकः, (V-2-118,119).

## ठन्

**तद्धितः** :- तरति (IV-4-5) इत्यर्थे नौ इत्यस्मात् । नावा तरति नाविकः । द्व्यचः प्रातिपदिकात् । घटेन तरति घटिकः । बाहुकः (IV-4-7).

**तद्धितः** :- वेतनादिभ्यो जीवति (IV-4-12) इत्यर्थे क्रयेन जीवति क्रयिकः । विक्रयिकः (IV-4-13) आयुधेन जीवति आयुधिकः । छः च. (IV-4-14).

**त** :- एति इत्यर्थे प्रतिपथ प्रातिपदिकात् । प्रतिपथिकः । अत्र ठक् च। ठकि तु किति च (VII-2-118) इति वृद्धिरपि । तेन प्रातिपथिकः इति (IV-4-42).

**त** :- तत्र नियुक्तः (IV-4-69). इत्यर्थे अकारान्तात् प्रातिपदिकात् । देवागारिकः (IV-4-70).

**त.** :- आर्हीये अर्थे (V-1-19) शतेन क्रीतः शतिकः । पक्षे यत् (V-1-21)

**त.** :- "तदस्मिन्" (V-1-47) इत्यर्थे भागशब्दात् । भागः वृद्धि लाभः अस्मिन् दीयते भागिकम् । यदपि । भाग्यम् (V-1-49).

**त.** :- हरति, वहति, आवहति इत्यर्थेषु वस्न शब्दात् । वस्निकः (V-1-51).

**त.** :- पूरणवाचिनः अर्धशब्दात् च "तदस्मि" (V-1-47) इत्यर्थे-द्वितीयोः वृद्धिः वा आयो वा दीयते द्वैतीयिकः (V-1-48).

त. :– अवयसि षण्मास्यो रोगः षण्मासिकः । ण्यदपि । षाण्मास्यः (V-1-84).

त. :– श्राद्धमनेन भुक्तमित्यर्थे ठन् । श्राद्धिकः । इनि प्रत्ययोऽपि (V-2-85).

त. :– मत्वर्थे केशात् = केशिकः (V-2-109).

तद्धितः :– "अत इति ठनौ" मत्वर्थे (V-2-115) दण्डोऽस्यास्तीति दण्डिकः । दण्डीच ।

त. :– व्रीह्यादिभ्यश्च । व्रीहिरस्यास्तीति व्रीहिकः । अन्ये च (V-2-116).

त. :– तुन्दादिभ्यः तुन्दिलः । अन्ये च (V-2-117).

त. :– तत्र जातः (IV-3-25) इत्यर्थे प्रावृट् प्रातिपदिकात् । प्रावृषिकः (IV-3-26).

## ड

इत् :– फलम् । चुटू (I-3-7) डिति प्रत्यये परतः ।

1. अङ्गस्य भस्य टेः लोपः । टेः (VI-4-143).
2. अभस्याऽपि लोपः टेः । अन्तात्यन्त (III-2-48).
3. ड्वितः क्त्रिः ((III-3-88) क्त्रेर्मम् (IV-4-20) कृत्रिमम् ।

## डः

कृत् :– खनो घ च (III-3-125) इत्यत्र (वा) "खनेर्डडरेकेकवको वाच्य" । अत्र आ + खन् + ड = आखः । डित्वसामर्थ्यात् स्वोत्तरवर्तिनो टेः "अन्" इत्यस्य लोपः । आखः । आखनः । आखानः । एते खनित्रवाचकाः ।

कृत् :– अन्तात्यन्त (III-2-48) एषूपपदेषु गमेर्डः । अन्तं गच्छति अन्तगः । पन्नं पतितं गच्छति पन्नगः । अत्र गम् + ड इत्यत्र डित्वसामर्थ्यादभस्यापि टेः लोपः ।

कृत् :– डत्वनिपातः । दाश्रृदाने इत्यस्य पुरः पूर्वस्य डत्वं कर्मणि च

ण्विन् । पुरेडा: (III–2-71).

**कृत्** :– कर्मण्युपपदे आशिषि वाच्ये हन्तेः डः । शत्रुहः अन्यत्र शत्रुघातः (III-2-49).

**कृत्** :– अपे क्लेशतमसोः (III-2-50) अपपूर्वात् हन धातो क्लेशतमः शब्दाभ्यां अनाशीरर्थे । क्लेशापहः । तमोपहः ।

**कृत्** :– सप्तम्यां जनेर्डः (III-2-97) सप्तम्यन्ते उपपदे भूतार्थे जनेर्डः सरसिजम् । मन्दुरायां जातः मन्दुरजः । अत्र ङ्यापोः संज्ञा (VI-3-63) इति ह्रस्वः । जनेर्डः = अन्येषूपपदेषु अपि । अजः । द्विजः (III-2-101).

**कृत्** :- न क्रामतीति नक्रः । क्रमेर्ड प्रत्ययो निपातान्तात्-न भ्राण्न (VI-3-75).

**कृत्** :– दशान्तात् प्रातिपदिकात् सप्तम्यर्थे डः । एकादश अधिका अस्मिन् शते इति एकादशं शतम् (V-2-45).

**कृत्** :– शदन्तविंशते । त्रिंशदधिका अस्मिन् शते त्रिंशं शतम् (V-2-40).

**उणादि** :- ऊर्णोतेर्डः-उर्णः (725).

**उणादि** :- अमन्तात् रण्डा (112) क्वादिभ्यः क्विन् । कुण्डम् (115) गुण्डः । धुण्डः = भ्रमरः ।

## डच्

**तद्धितः** :- बहुव्रीहौ संख्येये डच् अबहुगणात् (VI-3-73) उपदशाः ।

## डट्

**त०** :– तस्य पूरणे (V-2-48) एकादशानां पूरणं एकादशः । एकादश + डच् । टिलोपः ।

## डण्

**त०** :– "तदस्य परिमाणम्" (V-1-57) इत्यर्थे । त्रिंशदध्यायाः परि-

माणमेषां ब्राह्मणानां त्रैंशानि (V-1-62).

## डतमच्

त :- "वा बहूनां जातिपरिप्रश्ने = बहूनां मध्ये एकस्य निर्धारणे किंयत्तदोः । किमः कः (VII-2-103) क + डतमः । टेः (VI-4-143) ड इत् । कतमः । यतमः । ततमः । अत्र सर्वनामशब्देभ्यः (V-3-71) अकच् अपि। यको भवतां कठः सक आगच्छतु (V-3-93) एकाच्च प्राचाम् (V-3-94) एकतमः ।

तद्धितः :- कियत्तदोः निर्धारणे द्वयोः । कतरो कठः भवतोः । ततरो यतरो वा (V-3-92) अत्राप्यकच् ।

अत्र कतरकतमौ जातिपरिप्रश्ने (II-1-63) ज्ञापकम् । तेन जातिपरिप्रश्नेपि डतरच् ।

तद्धितः :- "अद्ड्डतरादिभ्यः पञ्चभ्यः (VII-1-25) सर्वादिगणान्तभूता (I-1-27).

## डति

तद्धितः :- "किम्" प्रातिपदिकात् संख्यायां परिमाणे च । का संख्या परिमाणमेषां जनानाम्। कति जनाः ? वतुप् अपि (V-2-41).

तद्धितः :- बहुगणवतुडति संख्या (I-1-23) अत्रापि "किमः संख्या" (V-2-41) इत्यत्रोक्त एव डतिः । अत्र डति प्रत्ययन्ता संख्यासंज्ञा । विंशतिः त्रिंशतिः इत्यादि । अयं डत्यन्तः संख्याशब्दः "डति च (I-1-25) इति षट्संज्ञकः । षट्संज्ञकेभ्यः परयोः जस्, शसोः लुक् भवति । षड्भ्यो लुक्

तद्धितः :- पञ्चन् दशन् शब्दौ डतिप्रत्ययान्तौ निपात्येते । वर्गे वाच्ये परिमाणमित्येतस्मिन् विषये । पञ्च परिमाणमस्य पञ्चन् वर्गः । पक्षे कन् । पञ्चको वर्गः । एवं दशन् वर्गः । दशको वर्गः (V-1-60).

उणादि :- पातेः डतिः = पाति (497).

## डर्

**कृत्** :- पश्य डः (III-3-125) वा ।

## डवतु

**उणादि** :- भातेः । भवतु (63).

## डस्

**कृत्** :- मन्त्रे श्वेतवह (III-2-71) इत्यत्र श्वेतवहादीनां डस् पदस्येति वक्तव्यम् (वा) श्वेता एनं । वहति श्वेताव श्वेत शब्दे कर्तृवाचके उपपदे कर्मणि ण्विन् श्वेतवा इन्द्रः । अत्र पदे डस् । श्वेतवोभ्याम् । श्वेतवोभिः । पदभिन्ने श्वेतवाहौ ।

**कृत्** :- अवे यजः । अवया (III-2-72).

## डा

**तिङ्** :- लुटः प्रथमस्य डारौरसः । कर्ता (II-4-85).

**सुप्** :- सुपां सुलुक् (VII-1-39) इत्येतेन नाभौ पृथिव्यामिति प्राप्ते नाभापृथिव्यामिति छन्दसि ।

## डाच्

**तद्धितः** :- अव्यक्तानुकरणात् शब्दात् यस्य अवरार्थे द्व्यच् तस्मात् अनितौ (कृभ्वस्तियोगे परतः) डाच् । डाचि विवक्षिते द्वे बहुलम् (वा) इति प्रकारे गुणवचनस्य (VIII-1-12) इति सूत्रस्थेन आदौ द्वित्वं पश्चात् डाच् । पटपटाकरोति (पटत् पटत् करोति) (V-4-57) पटत् पटत् आम्रेडितम् (VIII-1-2) पट+पटत् नित्यमाम्रेडिते डाचि भाष्यवार्तिक (VI-1-96) टेः (VI-4-143) भलोपः । पटपटा धातुः । पटपटा+क्यष् (III-1-13) पटपटा-यति-ते ।

**तद्धितः** :- कृषिकर्मण्यभिधेये द्वितीयतृतीयादि शब्देभ्यः डाच् कृञो मात्र योगे । द्वितीया करोति । शम्बा करोति । बीजा करोति (V-4-58).

**तद्धितः** :– संख्याया गुणान्ताया डाच्। द्विगुणाकरोति। त्रिगुणा-करोति (V-4-59).

**त.** :– समयप्रातिपदिकात् यापनायां गम्यमानायाम्। समया करोति (V-4-60).

**तद्धितः** :– अतिव्यथने गम्यमाने सपत्रनिष्पत्र शब्दाभ्याम्। सपत्रा-करोति मृगं व्याधः। निष्पत्राकरोति (V-4-61).

**तद्धितः** :- निष्कुलाकरोति पशून्। अन्तःस्थान् पशोरवयवान् बहिरानयति (V-4-62).

**तद्धितः** :- आनुलोम्ये। सेवकः स्वामिनं सुखाकरोति। प्रियाकरोति (V-4-63).

**तद्धितः** :– प्रातिलोम्ये प्रतियोगितायां गम्यमानायाम्। दुःखाकरोति (V-4-64).

**तद्धितः** :- शूलशब्दात् पाके। शूलाकरोति। मांसं पाचयति शूलेन (V-4-65).

**त** :– सत्यादशपथे। वणिक् सत्याकरोति भाण्डम् (V-4-66).

**तद्धितः** :- मुण्डने अर्थे = परिवापणे मद्रा शब्दात्। मद्राकरोति मुण्डयति (V-4-67).

# डाप्

**स्त्री** :- (1)मन्नन्तात् प्रातिपदिकात् (2) अन्नंताच्च बहुव्रीहेः स्त्रियां डाप् वा। पामा, पामे, पामाः। पक्षे पाम। पामानौ। पामन्+डाप् डित्व सामर्थ्यात् टेः अन् इत्यस्य लोपः। पाम्+आप् = पामा। बह्वो राजानः यस्यां सभायां बहुराजा। बहुराजन्+आप्। बहुराजे।बहुराजाः। पक्षे बहुराजानौ (IV-I-13).

# डामहच्

**त.** पितृव्य मातुल (IV-2-36) इति सूत्रे "ताभ्यां पितरि डामहच् मातरि षिच्च" इति (वा) पितामहः। मातामहः। पितामही।

# डित्

**उणादि:** – शृदृभसोऽदि: शरत् । अयमदि: (127) त्यजि तनि (129) डित् भवति । त्यज हानौ,त्यज्+अत्+ड – त्यद् = तनु = विस्तारे । तनु+अद्ड् । त्+द् = तद् । यज् पूजायां ।यज् = अज्+ड = य+द् = यद् (129)

# डिनि

**त** . तदस्य ब्रह्मचर्यम् (V-1-94) इति सूत्रे अवान्तरदीक्षादिभ्य: डिनि: (वा) अवान्तरदीक्षी । तिलव्रती ।

**त** · "प्रमाणे द्वयसच्" .(V-2-37) इति सूत्रे शन्शतो: डिनि: (वा) त्रिंशन: अङ्गिरस: ।

# डिमच्

**त** · सायं चिरं (IV-3-23) सूत्रे "अग्रपश्चात् डिमच्" (वा) अग्रिमम् पश्चिमम् । अन्त–अन्तिमम् ।

# डिमि:

**उणादि** :– कायते: । किम् (597).

# डियाच्

**त**· छ· सुपां सुलुक् (VII-1-39) सूत्रे सुक्षेत्रिया । सुक्षेत्रिणा इति वक्तव्ये ।

# डु

**कृत्** :– भूधातो: विप्रसंभ्य: उपसर्गेभ्य: । विभु: । प्रभु: । सम्भु: (III-2-180).

# डुतच्

**उणादि** :– अदिभुव: । अद्भुतम् (679).

## डुन्

**उणादि :–** श्मनि = मुखे श्रयते श्मश्रु (706).

**उणादि :–** अश्र् वादयश्च = अश्रु: (707).

## डुपच्

**तद्धितः :–** ह्रस्वे (V-3-86) द्योत्ये कुतू शब्दात् ह्रस्वा कुतू: । कुतु + डुपच् = कुतुपम् । उष्ट्रचर्मणा कृता डद्धरिणी लघ्वी (V-3-89).

## डुम्सुन्

**उणादि:–** पातेः डुम्सुन् । पुमान् (617).

## डुलच्

**तद्धितः :–** मातुः भ्रातरि । मातुलः । पितृव्यमातुलः (IV-2-36) सूत्रे (वा) ।

## डूः

**उणादि :–** भ्रमेश्च । भ्रूः । चात् गमेः अग्रेगूः (226).

## डैः

**उणादि :–** रातेः । राः - रायौ - रायः (224).

## डैसिः

**उणादि :–** उदिचेः । उच्चैः (690).

**उणादि :–** नौ दीर्घश्च । नीचैः (691).

## डो

**उणादि :–** गमेः गौः । गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यात् दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बु रश्मि-

23)

दृक् बाणलोमसु । बाहुलकात् । द्युतेरपि– डोः(225).

## डोसिः

**उणादि** :–दमेः । दोः दोषौ (227).

## डौः

**उणादि** :– ग्ला । ग्लौः । नुद–नौः (222).

### ड्मतुप्

**तद्धितः** :– "मतुप्" अर्थे–कुमुद् कुमुद्वान् । नड–नड्वान् । वेतस वेतस्वान् । टित्वात् टेः लोपः (IV-1-86).

## ड्य

**तद्धितः** :– "द्रुष्टं साम" (IV-2-8) इत्यर्थे । वामदेव्यम् (IV-2-9).
**त.** ::– भवे इत्यर्थे छ· स्रोत्यः (IV-4-113) पक्षे यत् । स्रोतस्यः ।

## ड्यण्

**त.** :– पाथसि भवः पाथ्यः (IV-4-111).

## ड्यत्

**त.** :– दृष्टं साम (IV-2-8) वामदेव्यम् । स्वरे विशेषः (IV-2-9).
**त.** :– भव इत्यर्थे स्रोत्यः स्वरे विशेषः (IV-4-113).

## ड्या

**त** . :– उर्विया परिधानम् । दार्विया । उरुणा दारुणा इति प्राप्ते छ. सुपां सुलुक् (VII-1-39).

## ड्रट्

**उणादिः** :– स्त्यायतेः स्त्री । स्त्यै+ड्रट् । डित्वात् टिलोपः । स्त्य्+रट् "लोपोव्योर्वलि" इति यलोपः । स्त्+र्+ङीप्=स्त्री (605).

# ड्रिः

**उणादि** :– तरते ड्रिः । तॄ प्लवन तरणयोः। तॄ + ड्रि = डित्वात् टिलोपः त् + रि = त्रि । नित्यबहुवचनं त्रयः (744).

# ड्वलच्

**तद्धितः** : नड, शाद, इत्येताभ्यां चातुर्थिकः, नड्वलः, शाद्वलः, टिलोपः (IV-2-88).

# ड्वुन्

त. :– आर्हीयेष्वर्थेषु विंशति त्रिंशद्भ्यामसंज्ञायाम्–विंशत्या क्रीतः विंशकः। त्रिंशकः । अत्र विंशतेर्डिति (VI-4-142) इति तिलोपः। टिलोपः विंश् + वुन्, युवोरनाकौ (VII-1-1) इति अकः । विंशकः (V-1-24) संज्ञायां किं। विंशतिकः ।

# ढ

**इत्** :– चुटू (I-3_7).

**आदेशः** :– तद्धितः प्रत्ययादेः ढस्य "एय" इति आदेशः (VII-1-2).

**आदेशः** :– होढः (VIII-2-31).

**उणादि** :– शमेर्ढः शण्ढः (99).

**उणादि** :– षम् । षण्ढः । जनिदा (544).

त. :– निरनुबन्धः ढक् ढञ् ढ इत्येतेषां साधारणः (VI-1-15).

त. :– सभा शब्दात् सप्तमी समर्थात् साधुरित्यर्थे । सभेयो युवास्य यजमानस्य वीरो जायताम् (IV-4-106).

त. :– इवार्थे शिलेयं दधि । शिलावत् (V-3-102).

## ढक्

त. :– अपत्यार्थे मण्डक शब्दात् । माण्डूकेयः। पक्षे अण् मांडूकः। इञ् मांडूकिः (IV-1-118&119)कित्वात् (VII-2-118) वृद्धिः ।

त. :– स्त्रीप्रत्ययान्तेभ्यः प्रातिपदिकेभ्यः । सुपर्णा-अपत्यं सौपर्णेयः ।

गार्गी-अपत्यं गार्गेयः । वृद्धिः (IV-1-120).

त· :– द्व्यचः (IV–1-121) गाङ्गेयः । कित्वात् वृद्धिः (VII-2-118).

त· :– इतश्चानिञः (IV-1-122).

इकारान्तात् द्व्यचः अनिञन्तात् शब्दात् अपत्ये । अत्रेरपत्यं आत्रेयः एवं नैधेयः । निधि शब्दः उपसर्गे घोः किः (III-3-92) इति किप्रत्ययान्तः न तु इञन्तः ।

त. :– ढकि लोपः (IV–1–133,134) अत्र पितृष्वसृ शब्दात् अपत्ये ढक् विधिः । अन्यत्र नियमाभावात् अनेनैव उन्नेयः । इदमेव ज्ञापकम् । पितृष्वसेयः । ऋलोपश्च ।

त. :– शुभ्रादिभ्यः । शौभ्रेयः (IV-1-123).

त. :– विकर्ण शब्दात्, कुषीतक शब्दात् काश्यपे अपत्ये अभिधेये। वैकर्णेयः । कौषीतकेयः । काश्यपभिन्ने वैकर्णिः (IV-1-124).

त. :– भ्रुवो रपत्यं भ्रौवेयः । वुक् आगमः (IV–1-125).

त. :– कल्याण्यादीनां इनङादेशश्च । काल्याणिनेयः (IV–1-126) कुलटा शब्दात् ढक् भवति । इनङ् वा कौलटिनेयः, कौलटेयः (IV-1–127).

त. :– दुष्कुलात् दौष्कुलेयः। खश्च (IV-I-142).

त· :– सास्य देवता (IV–2-24) इत्यर्थे ।

त. :– कलिना दृष्टं साम–कालेयं साम (IV-2-8).

अग्नेः आग्नेयो मन्त्रः (IV-2-33).

त· :– नद्यादिभ्यः शेषे ।नादेयम् । माहेयम् वाराणसेयम् (IV-2-97).

तद्धितः :– सोऽस्याभिजनः (IV-3-90) इत्यर्थे । तूदी अस्याभिजनः तौदेयः (IV-3-94).

तद्धितः :– तद्वहति (IV-4-76) इत्यर्थे धुरं वहति धौरेयः, यत् अपि धुर्यः (IV-4-77).

तद्धितः :– भावे कर्मणि च । कपेः कापेयम् । ज्ञाति शब्दात् ज्ञातेयम् (V-1-127).

**तद्धितः** :- धान्यानां भवने क्षेत्रे (V-2-2) व्रैहेयम् । शालेयम् ।

## ढकञ्

**तद्धितः** :- कुल शब्दात्, अपूर्व पदात् अपत्येऽर्थे ढक् वा कौलेयकः । पक्षे कुलीनः । यत् अपि । कुल्यः अपूर्वपदात् (IV-1-140).

तद्धितः :- शेषे (IV-2-92) इत्यर्थे कत्र्यादिभ्यः कात्रेयकः (IV-2-95).

**तद्धितः** :- अर्थविशेषेषु :-

कुलात् कौलेयकः श्वा । कौलो अन्यः ।

कुक्षेः कौक्षेयकः असिः । कौक्षोऽन्यः ।

ग्रीवायाः । ग्रैवेयकः ग्रैवोऽन्यः (IV-2-96).

## ढञ्

**तद्धितः** :- अपत्यार्थे चदुष्पाद्भ्यः कमण्डलुः चतुष्पात् विशेषः कामण्डलेयः । अत्रान्त्यस्य अकारस्य लोपः । ढे लोपो अकद्र्वाः (VI-4-147,IV-1-135).

**तद्धितः** :- गृष्ट्यादिभ्यश्च (IV-1-136) गृष्टेरपत्यं पुमान् गार्ष्टेयः । (IV-1-36).

**तद्धितः** :- संस्कृतं भक्षाः (IV-2-16) इत्यर्थे क्षीण शब्दात् क्षैरेयी यवागूः क्षीरे पक्वीकृतः (IV-2-20).

**तद्धितः** :- चातुर्थिकः सख्यादिभ्यः ढञ् । साखेयम् । साखिदत्तेयम् (IV-2-80).

**तद्धितः** :- सम्भूते (IV-3-41) अर्थे, कोशे सम्भूतं कौशेयं वस्त्रम् (IV-3-42).

**तद्धितः** :- तत्र भवः (IV-3-53) इत्यर्थे । दृतिः दार्तेयम् । कुक्षि कौक्षेयम् (IV-3-56).

**तद्धितः** :- ग्रीवासु भवं ग्रैवेयम् । अणपि । ग्रैवम् (IV-3-57).

**तद्धितः** :- अभिजनश्च (IV-3-90) इत्यर्थे । शलातुरशब्दात् शालातुरीयः (IV-3-94).

**तद्धितः** :- तस्य विकारः (IV-3-134) इत्यर्थे । एण्याः । ऐणेयम् (IV-3-159).

**तद्धित** :– तत्र साधुः (IV-4-94) इत्यर्थे एव पाथि साधुः **पाथेयम्** (IV-4-104) आतिथेयम् ।

**तद्धित**: :– तस्मै हितम् (V-1-5) इत्यर्थे पुरुष शब्दात् । पुरुषाय हितं पौरुषेयम् (V-1-10)

**तद्धितः** :- तस्मै हितम् (V–1-5) इत्यर्थे विकृति वाचिनः चतुर्थी समर्थात् शब्दात् प्रकृतावभिधेयायाम् । छदिभ्योः हितानि तण्डुलानि छादिषेयाणि । एवं औषधेयं दारु । बलाय हिताः बालेयास्तण्डुलाः (V-I-13).

**तद्धितः** :– "तदस्य तदस्मिन् स्यात्" इत्यर्थे (V-1-16) परिखा स्यात् अस्यां भूमौ पारिखेयी भूमिः (V-1-17).

**तद्धितः** :– इवार्थे (V-3–96) वस्तिरिव वास्तेयः (V-3-101).

**त**. :– तेन प्रोक्तं .(IV-3-101) इत्यर्थे छगलिना प्रोक्तं अधीयते वा छागलेयिनः । छगलिन्+ढिनुक्, "नस्तद्धिते" (VI-4-I44) इति टिलोपः. छगल्+एय(ढ) (वृद्धिः) इन् छागलेयिनः । अत्र कलापिवैशम्पायनान्तेवासिभ्यश्च (IV-3-I04) इति प्राप्तस्य णिनेः अपवादः ढिनुक् (IV–3-109).

## ढ्रक्

**त**. :– अपत्यार्थे गोधा शब्दात् । गौधेरः (IV-1-129).

## ण

**इत्** :– चुट् (I-3-7).

1. णितः प्रत्ययाः अण् । प्राग्दीव्यतोऽण् (IV-1-83).

   णितः प्रत्ययाः णः ज्वलति (III–I-140).

   णितः प्रत्ययस्य णमुल् आभीक्ष्ण्ये (III-4–22).

   णितः प्रत्ययाः णल् परस्मैपदानां (III-4–82) इत्यादयः ।

2. इत् फलं "अचोञ्णिति" (VII-2-115) वृद्धिः । णित् कार्यातिदेशः "गोतोणित्" (VII-1–90,91&92).

3, णः धात्वादिश्चेत् तस्य नः । णो नः (VI-1-65).

4. क्वचित् प्रत्ययस्य णत्वमतिदिश्यते । गोतो णित् (VII-I-90) गौः, गावौ, गावः इति । क्वचिच् ओतः अपि । द्यौः द्यावौ द्यावः (वा)।

5. क्वचत् णत्वप्राप्तमपि विकल्प्यते । णलुत्तमो वा । णित्कार्यं विकल्पेन भवति । अहं जगद–जगाद (VII-1-91) सख्युरसम्बुद्धौ (VII-1-92) अत्र सर्वनामस्थानेषु णित्कार्यं अतिदिश्यते असम्बुद्धौ सौ परतः । सखायौ सखायः (VII-1-92).

6. इत् संज्ञक णकारस्य प्रत्ययादिभागनिवेशने यत् फलं तस्मात् भिन्नं फलं, अन्त्यभागनिवेशने–ण प्रत्यये णकारस्य प्रत्ययादौ निवेशः । अण् प्रत्यये तावदन्त्यभागे । निरनुबन्धस्य तु उभयत्रापि अकारमात्रं साम्यम् । तथापि तयोः फलभेदः,यथा कुम्भं करोति। इति कुम्भकारः अण्। अण्णान्तस्य स्त्रियां ङीप्। टिड्ढाण् (IV-I-15) शीलिकामि णः (वा) कर्मण्यण् (III-2-1) सूत्रस्थवार्तिकेन मांसशील इति ण प्रत्ययान्तः कृत् । तस्य स्त्रीत्वे मांसशीला इति टाबेव भवति । न ङीप् ।

कृत् :– ज्वलादिकसन्तेभ्यः धातुपाठगत धातुभ्यः णः वा भवति । ज्वलति इति ज्वालः । ज्वलः इत्यपि । चलतीति चालः, चलः । तनोतेरपि (वा) अवतवोति इति अवतानः (III-1-140).

कृत् :– श्यैङ् प्रभृतिभ्यः धातुभ्यः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः (III-1-141).

कृत् :– दुन्योरनुपसर्गे । दावः । नावः (III-1-142).

कृत् :- ग्राहः जलचरः । ग्रह्–ज्योतिः शास्त्रे। पचाद्यच् । भावः। भवः इत्यपि (III-1-143).

कृत् :– नि उपसर्गपूर्वक अदधातोः णः स्यात्, अप् च। घञपोश्च (II-4-38) इति अपि परतः अदेः घस्लृ । निघसः (III-3-60).

कृत् :– कर्मण्युपपदे शीलिकामिभिक्षादिभ्यः। मांसशीला । मांसकामा (वा) (III-2-I) ईक्षि क्षमिभ्यांञ्च (वा) सुखप्रतीक्षा, बहुक्षमा (III–2-1).

तद्धितः :- गोत्रस्त्रियः कुत्सने गार्ग्या अपत्यं गार्ग्यः, जाल्मः । ठक् च (IV–I-147).

**तद्धितः** :- अपत्यार्थे फाण्टाहृतिमि मनाभ्यां फाण्टाहृतस्य सौवीरगोत्रा पत्यं फाण्टाहृतः । फिञ् अपि (IV-I-150).

**तद्धितः** :- तदस्यां प्रहरणं इत्यर्थे-दण्डः प्रहरणं अस्यां क्रीडायाम् । मौष्टा (IV-2-57).

**तद्धितः** षष्ठ्यर्थे छत्रादिभ्यः । छत्रं शीलं अस्य छात्रः । गुरुणा शिष्यः छत्रवत् छात्रः (IV-4-62).

**तद्धितः** "लब्धं" इत्यर्थे अन्न शब्दात् । आन्नः अन्नं लब्धा (IV-4-85)

**तद्धितः** :- साधुः इत्यर्थे भक्तेः = अन्ने साधुः भाक्तः । व्रीहिः (IV-4-100)

**तद्धितः** "यथा कथाच" शब्दात् दीयते इत्यर्थे । यथा कथा चम् । कार्यमित्यर्थेऽपि "हस्त" शब्दात् तथा । हस्तेन दीयते कार्यं वा हास्तम् (V-1-98).

**तद्धितः** :- हितमित्यर्थे सर्व शब्दात् । सार्वं सर्वस्मै हितम् (V-I-10)

**तद्धितः** :- "पथिन्" इति प्रातिपदिकस्य स्थाने पन्थ इत्यादेशः णश्च प्रत्ययः नित्यं गच्छति इत्यर्थे । पान्थः पन्थानं गच्छति । भिक्षां याचते (V-1-76).

**तद्धितः** :- मतुबर्थे । प्रज्ञा = प्राज्ञः । श्रद्धा = श्राद्धः । अर्चा = आर्चः पक्षे मतुप् । प्रज्ञावान् (V-2-101).

**तद्धितः** :- शैषिकः । अरण्यात् = आरण्याः सुमनसः (वा) अव्ययात्यप् (IV-2-104).

# णच्

**कृत्** :- कर्मव्यतिहारे क्रियाविनिमयः = परस्पर करणम् । तस्मिन् द्योत्ये भावे स्त्रीत्वे गम्ये-व्यावक्रोशी । परस्परं निन्दकः । व्यावहासी परस्परं हासकः । अत्र "णचः स्त्रियां अञ्" (V-4-14) इति स्वार्थे अञ्

# णमुल्

**कृत्** :- "कृन्मेजन्तः" (I-I-39) इति णमुलन्तमव्ययम् ।

**कृत्** :- शकि धातावुपपदे तुमुन् अर्थे णमुल् च छ । अग्निं वै देवा विभाज नाशक्नुवन् (III-4-12).

**कृत्** :- णमुलि परतः आदिर्वा उदात्तः । लोलूयं लोलूयम् आद्य-लो द्वितीयलू उदात्तौ (VI-1-194) समानकर्तृकयोः धात्वर्थयोः पूर्वकाले वर्तमाने ।

**कृत्** :- आभीक्ष्ण्ये = पौनःपुन्ये = भोजंभोजं व्रजति । क्त्वा च (III-4-22) अत्र "यत्" शब्दे उपपदे क्त्वा णमुलौ न भवतः । पूर्वोत्तर-कालिक क्रियापद द्रव्ययुक्तं वाक्यं वाक्यान्तरं नाकंक्षति चेत् । यदयं भुङ्क्ते ततः पठति । अत्र क्त्वा णमुलौ न । वाक्यान्तरापेक्षायान्तु यदयं भुक्त्वा व्रजति ततोऽधीते इति वाक्यं स्यात् (III-4-23).

एषु णमुल् विभाषा । अग्रे भोजं व्रजति, अग्रे भुक्त्वा । पूर्वभोजं-पूर्वं भुक्त्वा । प्रथमभोजं व्रजति प्रथमे भोजम् (III-4-24).

**कृत्** :- स्वाद्वर्थेषु उपपदेषु समानकर्तृकयोः पूर्वकाले कृञ् धातोः स्वादुङ्कारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते (III-4-26).

**कृत्** :- सिद्धाप्रयोगे गम्यमाने नीतिविरुद्धे गम्यमाने । अन्यथाकारं भुंक्ते । एवङ्कारं भुङ्क्ते (III-4-57).

**कृत्** :- असूया प्रतिवचने निन्दावाक्यमनादृत्योत्तरप्रदाने । यथाकारमंह भोक्ष्ये किं तवानेन (III-4-28).

**कृत्** :- साकल्ये कर्मणि कर्मणः पूर्णतया क्रियमाणे दृशिविदोः । यवनदर्शं घातयति । ब्राह्मणवेदं भोजयति (III-4-29).

**तद्धितः** :- यावदर्थे विद जीवधात्वोः । यावद्वेदं भोजयति । यावज्जीवं अधीते (III-4-30).

**तद्धितः** :- पूरे चर्मोदरयोः । चर्मपूरं स्तृणाति । उदरपूरं भुक्ते (III-4-3I).

**तद्धितः** :- वर्ष प्रमाणे पूरशब्दे ऊलोपः ।

1. गोष्पादपूरं वृष्टो देवः । सीतापूरं, सीताप्रं वृष्टो देवः (III-4-32).

2. चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपं। वसनक्नोपम् (1I1-4-33). "कषादिषु यथाविध्यनुप्रयोगः" (II1.4-46) इतिसूत्रे, निमूल समूल (1I1-4-34) उपमाने कर्मणि च (I1I-4-45) इत्यन्तमनुप्रयोगः। यस्मात् णमुलुक्तः स एवानुप्रयोक्तव्यः।

**कृत्** :- कष धातोः निमूल समूलयोः निमूलकाषं कषति। मूलानि विहाय। समूलकाषम् (III-4-34).

**कृत्** :- पिषधातोः शुष्कादिषु कर्मसूपपदेषु। शुष्कपेषं पिनष्टि, रूक्षपेषं, चूर्णपेषम् (III-4-35).

**कृत्** :- हन धातोः समूले कर्मणि उपपदे समूलघातं हन्ति। कृञ्धातोः अकृते उपपदे अकृतकारं करोति। ग्राहधातोः जीवे उपपदे जीवग्राहं गृह्णाति (III-4-36).

**कृत्** :- करणे कारके हन् धातोः णमुल्। पादघातं हन्ति। अत्र हन् धातोः ग्रहणं यथाविध्यनुप्रयोगार्थं नित्यसमासार्थञ्चाहिंसार्थानां (III-4-48) इत्यत्रापि हन् पठितः। तत्र उपपदसमासस्य विकल्पः इति ज्ञेयम् (IIi-4-37).

**कृत्** :- स्नेहन् वाचिनि करणे उपपदे पिषधातोः स्नेहपेषं पिनष्टि। उदपेषं पिनष्टि। उदकस्य उदादेशः। पेषंवास (V1-3-58) इति उदादेशः (III-4-38).

**कृत्** :- हस्तवाचिनि करणे उपपदे वर्ति (णिजन्त) ग्रहधातुभ्यां हस्तवर्तं वर्तयति। करवर्तम् (गुलिकां करोति) हस्तग्राहं गृह्णाति (III-4-39).

**कृत्** :- अत्र स्व शब्देन स्वंरूपं शब्दस्येति स्वरूपे स्वपर्याये धनादिकेऽपि णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोष मपि पुष्णाति (III-4-40).

**कृत्** :- अधिकरणे चक्रबन्धं बध्नाति। चक्रे बध्नाति (III-4-41).

**कृत्** :- बध्नातेः संज्ञायां चक्रबन्धं बद्धः। अट्टालिकाबन्धं काव्यम् (1II-4-42).

**कृत्** :- कर्तरि उपपदे जीवे, पुरुषे, नशि, वहि धात्वोः, जीवनाशं नश्यति। पुरुषवहं वहति (III-4-43).

कृत् :- ऊर्ध्व शब्दे कर्तरि उपपदे-शुषिपूर धातुभ्यां ऊर्ध्वशोषं शुष्यति वृक्षः । ऊर्ध्वपूरं पूर्यते घटः (III-4-44).

कृत् :- उपमाने उपपदे कर्मणि। घृतानिधायं निहितः । जलम् घृतमिव रक्षिता कर्तरि अजकनाशं नष्टः, = अजक इव नष्टः (III-4-45).

कृत् :- तृतीयान्ते उपपदे दस्धातोः णमुल्,मूलकेन उपदशं = मूलको-पदंशं भुङ्क्ते अद्रिकोपदंश म् (III-4-47).

कृत् :- तृतीयान्ते उपपदे अनुप्रयुक्तधातोः यत् कर्म तत्समान कर्मक हिंसार्थकधातोः णमुल् । दण्डोपघातं गाः कालयति । दण्डेनोपघातञ्च । नखोपघातं यूकान् गृह्णाति (III-4-48).

कृत् :- तृतीयान्ते सप्तम्यन्ते च उपपूर्वक पीड, रुध, कर्षधातुभ्यः । पाश्वर्वो पपीडं, पाश्वर्भ्यां उपपीडं, पाश्वर्योरुपपीडं शेते (III-4-49)'

कृत् :- समासत्तौ नैकट्ये । केशग्राहं युध्यन्ते (III-4-50).

कृत् :- प्रमाणे गम्यमाने तृतीयान्ते सप्तम्यन्ते उपपदे । द्व्यङ्गुलोत्कर्ष-खण्डिकां छिनत्ति, द्व्यङ्गुलेन उत्कर्षं, द्व्यङ्गुले उत्कर्षं (III-4-51).

कृत् :- अपादाने उपपदे परीप्सायां-

त्वरायां गम्यमानायां यः । शयोत्थायं धावति । शय्यायाः उत्थाय (III-4-52) उत्था + णमुल् = अम् । आतो युक् (VII-3-33).

2. द्वितीयान्ते उपपदे परीप्सायां-यष्टिग्राहं युध्यन्ते यष्टि ग्राहं (III-4-53).

कृत् :- अध्रुवाङ्गवाचि शब्दे कर्मण्युपपदे यस्मिन्नङ्गे छिन्नेऽपि प्राणी न म्रियते तदध्रुवमङ्गम् । अक्षि निकाणं जल्पति । अक्षिणी निमील्य भ्रूविक्षेपं कथयति (III-4-54).

कृत् :- परिक्लिश्यमान स्वाङ्गवाचि शब्दे द्वितीयान्ते उपपदे-उरः पेषं युध्यन्ते,उरसि दुःखेन दूयमानेऽपि । शिरः पेषं विवदन्ते वादिनः । (III-4-53.)

कृत् :- व्याप्यमाने (गेहादिपदार्थे)तथा आसेव्यमाने (क्रिया पौनः-पुन्ये द्वितीयान्ते शब्दे उपपदे

1- विशिधातोः गेहानुप्रवेशं-गेहं गेहं अनुप्रवेशं । गेहमनुप्रवेशं अनुप्रवेशं आस्ते :

2. गेहानुप्रपातम्

3. गेहानुप्रपादम्

4. गेहानुस्कन्दम्

अत्र गेहंगेहमिति द्वित्वं "नित्यवीप्सयोः" (VIII-1-4) इति केचित् । अन्ये समासेनैवेति वदन्ति । (III-4-56).

कृत् :- कालवाचि द्वितीयान्तशब्दे उपपदे क्षेपणार्थक-असु ञितृषा धातुभ्यां क्रियान्तरे वर्तमानाभ्याम् द्व्यहात्यासं गाः पाययति द्व्यहतर्षं पाययति । (III-4.57).

कृत् :- द्वितीयान्ते नामशब्दे उपपदे आदिश- ग्रहधातुभ्यां नामादेशं आचष्टे । नामग्राहं आह्वयति । (III-4-58).

कृत् :- अयथाभिप्रेताख्यानं = अप्रियस्य उच्चैः प्रियस्य च नीचैः कथनम् । तस्मिन् अव्यये कृञ् धातोः णमुल् । क्त्वा च । उच्चैःकारमप्रियं आचष्टे । नीचैः कारं प्रियमाचष्टे । क्त्वाऽपि । उच्चैः कृत्वा । नीचैः कृत्वा । समासपक्षे ल्यप् । उच्चैःकृत्यः । नीचैः कृत्यः । अत्र समासे विग्रहवाक्ये च किञ्चिद्वैलक्षण्यम् (III-4-59).

कृत् :– तिर्यक् शब्दे उपपदे अपवर्ग–समाप्तौ गम्यमाने-तिर्यक् कारं गतः । तिर्यक् कृत्य गतः । (III-4–60).

कृत् :- तस् प्रत्ययान्त स्वाङ्गवाचिनि उपपदे कृ भूधातुभ्याम् । मुखतः कारं गातः । मुखतः कृत्वा । समासे मुखतःकृत्य (III-4.61).

कृत् :– ना प्रत्ययः- नाञ् प्रत्ययः यथासंख्यं "वि" शब्दात् "ना" शब्दात् भवतः । "वि नञ् भ्यां नानाञौ नसह" (V-2-27).

धा-प्रत्यय द्वित्र्योश्च धमुञ् (V-3-45) नाधार्थप्रत्यये = नाप्रत्यः

धार्थप्रत्ययश्च यस्मादिति बहुव्रीहिः । तस्मिन् च्व्यर्थके उपपदे कृभ्वोः णमुल् । अनाना नाना कृत्वा नानाकारं । नानाकृत्वा । नानाकृत्य । अनेकं = द्वयं एकं भूत्वा = एकधाभावं । एकधाभूत्वा । एकधाभूय । (III-4-62).

**कृत्** :- तूष्णीमिति उपपदे भुवः । तूष्णींभावम् । तूष्णींभूत्वा । तूष्णींभूय । तूष्णीभावम् । (III-4-63).

**कृत्** :- आनुलोम्यार्थक-अन्वक् शब्दे उपपदे भूधातोः । अन्वक्भावं, अन्वक्भूत्वा, अग्रतः पार्श्वतः पृष्ठतः अनुकूलो भूत्वा इति । किञ्च अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वा । अत्रानुलोम्यार्धाभावात् णमुल् न । (III-4-64).

# णल्

**तिङ्** :- लिटि प्रथमैकवचनम् । "परस्मैपदानां णल्" (III-4-82) गद् + णल् अभ्यासः जगद + णल् णित्वात् जगाद (III-4-82).

**तिङ्**:- लिटि उत्तमैकवचनं "परस्मैपदानां" (III-4-82) जगाद । अत्रणित्वविकल्पः । णलुत्तमो वा (VII-1-91) जगद इत्यपि ।

**तिङ्** :- आत औ णलः(VII-1-34) भा + णल्, अभ्यासः,आवादेशः बभौ

# णस्

**त** :- ब्राह्मण (IV-2-42) सूत्रे काशिकायां ग्रामजन (IV-2-43) सूत्रे अन्यत्र पठितं वार्तिकं "पर्श्वा णस् वक्तव्य"इति । समूहार्थे-पर्शूनां समूहः पाशर्वम् ।

अत्र पर्शु + णस् । णसः सित्वात् पर्शु इत्यस्य पदत्वम् । सिति च (I-4-6)पदत्वात् न गुणः ।

**तिङ्** :- णि, णिङ्, णिच् एषां सामान्यग्रहणम् ।

**तिङ्** :- अकर्त्रभिप्राये क्रियाफले णि प्रत्ययादात्मनेपदविधिः । "णेरणौ यत्कर्म"(I-3-67) दर्शयते हरिर्भक्तान् ण्यन्तं । पश्यन्ति हरिंभक्ताः अण्यन्तं

वाक्यम् । अत्र णिचि वक्तव्ये णि: । अनाध्याने एव । उत्कण्ठापूर्वकस्मरणे तु परस्मैपदमेव । स्मरयति वनगुल्मं कोकिल: ।

**तिङ् :–** हेतुभये-हेतु: लकारवाच्य: कर्ता तस्मात् भयं चेत् बिभेति स्मयति धातुभ्यां णिजन्ताभ्यां आत्मनेपदम् । जटिलो भीषयते । भियो हेतु भये षुक् (VII-3-40) इति षुक् । मुण्डो विस्मापयते । अर्तिह्री (VII-3-36). इति पुक् आगम: । हेतुभयाभावे । कुञ्चिकया एनं भाययति, विस्माययति रूपेण (I-3.68).

**प्रलम्भने** विषभे गृधु अभिकांक्षायां, वञ्चु गतौ इत्याभ्यां ण्यन्ताभ्यां आत्मनेपदम् । माणवकं गर्धयते वञ्चयते वा । प्रलम्भनाभावे श्वानं गर्धयति । (I-3-69).

**तिङ् :–** लीङ् दिवादि ली क्र्यादि श्लेषणे उभाभ्यां ण्यन्ताभ्यां संमाननशालीनीकरणयो: अर्थयो: आत्मनेपदम्-जटाभि: आलापयते = पूजां समधिगच्छति । कस्त्वामुल्लापयते? प्रलम्भयति । श्येनो वर्तिकां उल्लापयते = न्यक्करोति । संमाननाद्यभावे बालकमुल्लापयति (I-3-70).

**तिङ् :-** अभ्यासे गम्यमाने कृ धातो: ण्यन्तात् मिथ्योपपदे-पदं मिथ्या कारयते । सापचारं दुष्टं स्वरमसकृदुच्चारयति । अभ्यासाभावे पदं मिथ्या कारयति = सकृदुच्चारयति (1 3-71).

**तिङ् :-** बुध युधादि धातूनां कर्त्रभिप्राये क्रियाफले आत्मनेपदे प्राप्ते परस्मैपदम् बोधयति । योधयति(I-3-86).

**तिङ् :-** गत्यर्थानां बुध्यर्थानां भोजनार्थानां शब्दकर्मकाणां, अकर्मकाणां अण्यन्तावस्थायां य: कर्ता स: ण्यन्तावस्थायां कर्मसंज्ञको भवति

1. गच्छति रामो ग्रामम् । तं ग्रामं गमयति कृष्ण: ।
2. स: धर्मं वेत्ति–तं धर्मं वेदयति
3. पान्थो मोदकं भुङ्क्ते- पान्थो मोदकं भोजयति ।
4. विप्रो गीतां अधीते-विप्रं गीतां अध्यापयति
5. आस्ते शिष्य: । शिष्यं आसयति (I.4-52).

तिङ् :- हृञ् कृञ् धात्वो: अण्यन्तयो: य: कर्ता स ण्यन्तयो: कर्म। हरति माणवको भारम्-हारयति माणवकं भारम्। हारयति माणवकेन भारं करोति कुलालो घटम्-कारयति कुलालं घटम्। कारयति कुलालेन घटम् (I-4-53).

तिङ् :- णौ आर्धधातुके परत: अज्ञानार्थस्य इण् धातो: गमिरादेशो भवति। गमयति-गमयत:-गमयन्ति। (II-4-46).

तिङ् :- सन्परक णिच्परक इङ् धातो: तथा चण्परक णिच्परक इङ् धातो: गाङ् इत्यादेश: वा अधिजिगापयिषति। अध्यापयिषति। अध्यजीगपत्। अध्यापिपत् (II-4-51).

कृत् :- छ तच्छीलादिषु ण्यन्तस्य कर्तृषु लटि इष्णुच्। दृषदं धारयिष्णव: (III-2-137).

तिङ् :- सन्परे च णौ परत: श्वयते: वा सम्प्रसारणम्। श्वि + णि + सन् = शिशावयिषति। शिश्वाययिषति। सम्प्रसारण तदाश्रयञ्च कार्यं बलवत् परिभाषा इति अन्तरङ्गस्याऽपि वृध्दे: आयादेशस्य च बाध:। श्वि + णि + चङि अशूशवत्। अन्यथा वृध्दि आयादेशयो: कृतयो: पश्चात् सम्प्रसारणे-अशीशवत् इति। पक्षे सम्प्रसारणाभावे अशिश्वयत्। (VI-1-31).

तिङ् :- डुक्रीञ् इङ् जि इत्येषां एच: स्थाने आकारादेश: णौ परत:। एवं वृध्दिगुणादेशयो: कृतयो: एजन्तत्वं यत् प्राप्नोति तत्स्थाने आत्।

1. डुक्रीञ्-द्रव्यविनिमये-क्रै + णि + ति आत्वे कृते, आत्वात् अर्ति (VII-3-36) पुक्। क्रापयति।

2. इङ् –अध्ययने = अध्यापयति

3. जि_जये = जापयति (VI-1-48).

4. अन्नं साधयति। "सिध्यतेरपारलौकिके" (VI-1-49).

तिङ् :– चिञ् स्फुर इत्येतयो: धात्वो: एच: स्थाने आत् वा। चापयति चाययति। स्फारयति। स्फोरयति (VI-1-54).

अत्र चाप इति प्राप्ते मित्वात् चपयति।

तिङ् :- दुष् वैकृत्ये क्र्यादि श्यन्विकरणः । तस्योपधायाः ऊत् स्यात् णिपरतः । दूषयति । लघूपधगुणापवादः ऊत् (VI-4-90).

तिङ् :- "वृत्तम्" इत्यस्मात् अध्ययनार्थे णिलुक् इडभावश्च । वृत्तं छन्दः अधीतमिति यावत् । अकर्मको धातुः ण्यन्तः सकर्मकः । अध्ययनादन्यत्र वर्तिता रज्जुः (VII-2-26).

तिङ् :- अर्तिह्रीत्यादि धातूनां अङ्गानां आकारान्तधातूनां च पुग् आगमः णौ परतः । अर्पयति, ह्रेपयति, दापयति (VII-3-36)

तिङ् :- अयामन्ता (VI-4-55) णेरयादेशः आमादिषु, "ल्यपि लघुपूर्वात्" (VI-4-56) प्रशमय्य । "विभाषाऽऽपः" (VI-4-57) प्रापय्य । प्राप्य ।

तिङ् :- चङ्परक णिपरकोपधायाः ह्रस्वः । "कमेर्णिङ्" (III-1-30) कमि + णि + चङ् । "चङि" (VI-1-11) अ + चकम् + णि + त् सन्वल्लघुनि (VII-4-93) सन्वद्भावः । "सन्यतः" (VII 4-79) अभ्यासेकारः । अचिकमत् "दीर्घो लघोः" (VII-4-94) अचीकमत् ।

आयादय आर्धधातुके वा (III-1-32) इति णिङभावपक्षे णेरभावात् न सन्वद्भावः । नापि दीर्घः । अचकमत (VII-4-1)

तिङ् :- ण्यन्तात् यः कृत् प्रत्ययः तत्स्थस्य नकारस्य उपसर्गस्थात् निमित्तात् उत्तरस्य णकारोदेशो वा । प्रयापणम् । प्रयापनम् (VIII-4-30)

तिङ् :- "णिश्रिद्रुस्रुभ्यः" (III-1-48) ण्यन्तात् श्र्यादिभ्यश्च च्लेः चङ् भवति ।

तिङ् :- "णेरनिटि" अनिडादावार्धधातुके णेः लोपः कार्यते (VI-4-51) कारितम् (52) जानिता (53) शमिता (VI-4-54).

तिङ् :- पुच्छ भाण्ड चीवरेभ्यः कर्मवाचिभ्यः करोत्यर्थे विशेषकार्ये पुच्छात् उदसने व्यसने पर्यसने गौरुत्पुच्छयते (वा) । भाण्डात् समाचयने सम्भाण्डयते । भाण्डानि समाचिनोति । चीवरादर्जने परिधाने च । सचीवरयते भिक्षुः । उत्पुच्छ् अतो लोपे स्थानिवद्भावे न गुणः (III-1-20).

तिङ् :- कर्तृप्रयोजकः हेतुः (I-4-53) हेतुसंज्ञकस्य कर्तृप्रयोजकस्य

व्यापार प्रेषणादिः हेतुमान् तस्मिन् द्योत्ये धातोः णिच् । घटं करोति कुलालः। कुलालेन घटं कारयति स्वामी । णिङङ्गान्निरसेन (वा) (III-1-26)

तिङ् :- कमेर्णिङ् (III-1-30) कमु-कान्तौ = कान्तिः (इच्छा) कम् + णिङ् = स्वार्थे णिङ् । ङित्वात् आत्मनेपदम् । कामयते। णित्वम्-अत उपधाया (VII-2-116) इति वृद्धिः कमु उकारान्त धातुः ।

## णिच्

तिङ् :- 1. मुण्डमिश्रादिभ्यः कृञर्थे । मुण्डं करोति मुण्डयति । हलि कल्यादिभ्यः ग्रहणेऽर्थे । एतयोरदन्तत्वञ्च (वा) हलयति (III-1-21) अदन्तत्वात् अतो लोपः(VI-4-48) अकारः स्थानिवत् ।

2. सत्यापपाशादिभ्योऽपि । सत्यापयति । अर्थवेदसत्याना-मापुक् (वा) अर्थापयति । सत्याप (प्रातिपदिक) + णिच् = धातु अतो लोपः । सत्यापि सनाद्यन्त धातुः, सत्यापि + शप् + तिप् = सत्यापयति । सत्यापयति, श्लोकै-रुपस्तौति । उपश्लोकयति, चूर्णैरवध्वंसयति । अव चूर्णयति । सर्वे सनाद्यन्तधातवः (III-1-25).

तिङ् :- चुरादिभ्यः स्वार्थे णिच् । चोरयति । चुर् धातुः, चुर् + णि = चोर + इ = चोरि + शप् (III-1-25).

तिङ् :- क्रिया कर्तुः प्रयोजकः हेतुरुच्यते । तस्य प्रेरणादि व्यापारः व्यापारहेतोः हेतुमान् । हेतुमति वाच्चे धातोः णिच् । कुलालः घटं करोति कुलालेन घटं कारयति स्वामी । ओदनं पाचयति । सूत्रं करोति सूत्रयति इत्यपि (वा) (III-1-26).

तिङ् :- प्रातिपदिकात् धात्वर्थे णिच् बहुलं इष्टवच्च-गणसूत्रं (203) धात्वर्थाः (1) करणं (2) आख्यानं, (3) दर्शनं (4) वचनं, (5) श्रवणं एष्व-र्थेषु प्रातिपदिकात् णिच् भवति। घटं करोति घटयति । पटुमाचष्टे पटयति । पटु + णि + ति। अत्र आदौ वृद्धिः । पटौ + इ + ति पट + णि

+ति टिलोपः । पट् + इ + शप् + ति) पटि + अ + ति । गुणः पटयति। एवं दर्शनादयोऽर्थाः । अत्र टिलोपः इष्टवत् ।

**तिङ्** :- तत्करोति तदाचष्टे· गणसूत्र-204. तत्करोति, तदाचष्टे इत्यर्थयोः प्रातिपदकात् णिच् भवति । तत्करोति इत्यस्योदाहरणं = घटं करोति = घटयति । तदाचष्टे इत्यस्योदाहरणं = कंसवधमाचष्टे = कंसं घातयति ।

**तिङ्** :- तेनातिक्रामति-गणसूत्रं-205. अश्वेनातिक्रामति = अश्वयति गजेन अतिक्रामति = गजयति । वाचा अतिक्रामति । अत्र वाच् + णि इत्यत्र असुबन्तादेव णिः । प्रातिपदिकात् धात्वर्थे इत्युक्तत्वात् ।

**तिङ्** :- कर्तृकरणात् धात्वर्थे गणसूत्रं 207. असिना हन्ति = असयति साथकातमं करणं इति कर्तुरभिमतफलोत्पादनसमर्थं करणमसिः । अत एव कर्तृपदसार्थक्यम् । अन्यथा चक्षुरादीनामपि करणत्वं प्रसिद्धमेव । कर्तृकरणा- दिति द्वन्द्वमाश्रित्य देवदत्तेन वाचयति देवदत्तयति इत्यपि ।

**तिङ्** :- णिच् प्रकृतिः धातुरूपं प्रतिपद्यते, इत्यर्थकं गणसूत्रं धातुरूपं चेति-206. । अस्य सूत्रस्य विवरणं वार्तिकेन । एवं "आख्यानात् कृतस्तदाचष्टे कृल्लृक् प्र कृति प्रत्यापत्तिः प्रकृतिवच्च कारकम्" । वार्तिकमिदं हेतुमति च (III-1-26)इत्यत्र पठितम् । वार्तिकस्यार्थः- इतिवृत्तस्य कस्यचित् कथारूपस्य कथनं आख्यानम्। इतिवृत्तवाची शब्दः कश्चन कृत्प्रत्ययान्तः । कंसवधं, रावणवधं, जानकीपरिणयः इत्यादिः । कृदन्तात् इतिवृत्तवाचीशब्दात् प्रातिपदिकात् तदाचष्टे इति धात्वर्थे णिः । कंसवधमाचष्टे इत्यर्थे कंसवध + णिच् । अत्र प्रक्रियाविशेषः । कृत् लुक् प्रकृति प्रत्यापत्तिः । णिच् प्रकृत्यवयव भूतस्य हनधातोः "हनश्च वधः" (III-3-76) इति भावे वधादेशस्य कृतः लुक् । तस्य या मूलप्रकृतिः हन इति रूपा तस्या एव प्रत्यापत्तिः । आदेशादिवि- कार रहितस्य स्वरूपेणावस्थानम् । समसेऽपि गते कंस + हन् + इ (णि) इति स्थिते प्रकृतिवच्च कारकं इति वार्तिकस्यान्तिमो भागः। अस्यार्थः अत्र चकारेण कार्यमुच्यते ।

"प्रकृतिवत्-कारकं कार्यं च" इति भिन्नक्रमेणान्वयः । हेतुमण्णिचि

या प्रकृतिः "कंसं + हन् + णि इति तस्यां प्रकृतौ यादृशं कारकं" कंसं"इति द्वितीयान्तं यादृशं च कार्यं प्रक्रीयारूपं कुत्वतत्त्वादिः "हो हन्तेञ्णिन्नेषु"" (VII-3-54) इति हन धातोः हस्य कुत्वे न वत्वम्। "हनस्तोऽचिण्णलोः" (VII.3-32) इति हन धातोः नस्य तकारदेशः, तदिहाऽपि भवति। तेन कंस वधमाचष्टे कंसं घातयति, कंसमजां घनत् इति रूपसिद्धिः। एवं बलिं बन्धयति। राजानमाचष्टे, राजानमागमयति। आरात्रिविवासमाचष्टे = रात्रिं विवासयति। अत्राङ्लोपः किं वल्लरात् प्रस्थितः नगरे सूर्योद्गमं सम्भावयते = सूर्यमुद्गमयते (वा)

"नक्षत्र योगे ज्ञि" (वा) पुष्ययोगं जानाति पुष्येण योजयति। मघाभिः योजयति।

तिङ् :- णिजन्तात् धातोः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। = कटं कारयते स्वार्थम्। कटं कारयति परार्थम् (I-3-74).

तिङ् :- णिच् प्रत्ययस्य प्रकृतिस्त्रिधा।

1. धातुः-गम्लृ + णिच् = गमयति।
2. प्रातिपदिकम् = वाच् + णि = वाचयति।
3. कृदन्तात् = बलिबन्धमाचष्टे = बलिं बन्धयति।

# णित्रन्

**उणादि** :- भू = भावित्रम्। वादि = वादित्रम्। गॄ = गारित्रम् ओदनम्। चर = चारित्रम् (610, 611).

# णिनिः

**कृत्** :- ग्रहादिगणात्-ग्रह + णिनि, उपधावृद्धिः, ग्राह + इन् = ग्राहिन् सौ च (VI-1-13) इति इनि परतः उपधादीर्घः ग्राहिन् -ग्राहिन् + सु = हल्ङ्याबिति (VI.1-66) सुलोपः। नलोपः सुप् (VIII-2-7) नलोपः। ग्राही। एवं स्थायी, मन्त्री, परिभावी, परिभवी। नन्दि (III-1-134).

**कृत्** - कुमारे शीर्षे च उपपदे हन् धातोः कुमारघाती कुमारघाती

होहन्तेरितिकुत्वम्, 'हनस्तो' इति तत्वम्। शिरस् इत्यस्य शीर्षादेशः (VI-1-62) शीर्षघाती III-2-51)

**कृत्** :– ताच्छील्ये–ब्राह्मणादिजातिवाचकभिन्ने सुबन्ते उपपदे उष्ण-भोजी–शीतभोजी । जातिवाचके उपपदे ब्राह्मणानां आमन्त्रयिता । आमन्त्रणं शीलमस्य । अत्र अताच्छील्येऽर्थेऽपि णिनिः । साधुदायी (वा) ब्रह्मवादी (वा) साधुदायी इत्यत्र आतो युक् इति च (III-2-78) इति यः ।

**कृत्** :– कर्तृवाचिनि उपमाने उपपदे धातोः णिनिः । उपपदवाच्यः कर्ता प्रत्ययवाच्यस्य कर्तुः उपमानम् । ध्वांक्ष इव रौति ध्वाक्षरावी कर्मणि णिनिः न । अपूपानिव माषान् भक्षयति (III-2-79).

**कृत्** :– व्रते गम्यमाने स्थण्डिले शायी । अत्र तत्पुरुषे कृति बहुलं इति अलुक् (III-2-80).

**कृत्** :– आभीक्ष्ण्ये गम्यमाने। पुनः पुनः क्षीरं पिबति क्षीरपायी-बहुल मित्युक्तेः कुल्माषखादः अत्र न णिनिः (III-2-81).

**कृत्** :– मन्यते इत्यर्थे । दर्शनीयमानी दर्शनयोग्यं मन्यते इति यावत् (III-2-82).

**कृत्** :– आत्ममाने अर्थे आत्मानं पण्डितं मन्यते पण्डितमानी । खशापि पण्डितम्मन्यः । सुरूपमानी, दर्शनीयमानी (III–2-83).

**कृत्** :– भूते करणे यजः कर्तरि । अग्निष्टोमयाजी । अग्निष्टोमेन पूर्वमिष्टवान् । अग्निष्टोमयागेन अपूर्वमुत्पादितवान् (III-2-85).

**कृत्** :– कर्मणि–पितृव्यघाती (III-2-86) आवश्यकमुपाधिः वोपपदम्

**कृत्** :– कर्तरि अवश्यम्भाव विशिष्टे अर्थे अवश्यंकारी, प्रातः स्नायी ।

**कृत्** :– आधमर्ण्ये अर्थे सहस्रंदायी = सहस्रं ऋणत्वेन देयम् (III-3-170).

**तद्धितः** :– तेन प्रोक्तमित्यर्थे (IV-3-101) काश्यपकौशिकाभ्या मृषिभ्यां णिनिः (IV-3-103) प्रोक्तं नाम प्रकर्षेणोक्तं व्याख्यानं न तु कृतम् । कृतमित्यस्य तु अधिकृत्य कृते ग्रन्थे इति चरितार्थत्वात् । काश्यप + णिनिः इति स्थिते "तदधीते तद्वेद" (IV-2-59) इति अध्येतृ वेदितृ प्रत्ययस्य

"प्रोक्तात् लुक्" (IV-2-64) इति लुक् विहितः। तत्र छन्दो ब्राह्मणादीनि तद्विषयानि (IV-2-66) इति। छन्दोब्राह्मणादीनि प्रोक्तप्रत्ययान्तानि, अध्येतृ वेदितृ प्रत्ययविषयाण्येव भवन्ति। अध्येत्रर्थं वेदित्रर्थं विना प्रोक्तप्रत्ययान्तत्व मात्रेण छन्दोब्राह्मणादीनां स्वातन्त्र्येण वाक्यं परिकल्प्य वा प्रयोगः। नैव सम्भवति। यस्य प्रोक्तप्रत्ययान्तशब्दस्य स्वातन्त्र्येण प्रयोगो दृश्यते तस्य विग्रहवाक्यमपिदृश्यते। पाणिनिना प्रोक्तं पाणिनीयम् शास्त्रमिति यावत्। छन्दोब्राह्मणादि विषये तथा न। अध्येतु वेदितृविषयक एव प्रयोगः। एवं काश्यप + णिनिः। अत्र काश्यपिन इति। काश्यपेन प्रोक्तं अधीयते इत्यर्थक एव। काश्यपेन यद्यपि कल्पग्रन्थः प्रणीतः न तु छन्दः, तथापि "शौनकादिभ्यः छन्दसि" (IV-3-106) इत्युक्तत्वात् छन्दोब्राह्म (IV-2-66) इति अध्येतृविषयता प्रवर्तत एव। एवं कौशिकिनः कौशिकप्रोक्ताध्यायिनः।

**तद्धितः** :- कलाप्यन्तेवासिभ्यः हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः वैशम्पायनान्तेवासिभ्यः पालङ्गिनः प्रोक्तार्थे एव (IV-3-104).

**तद्धितः** :- पुराणप्रोक्तं ब्राह्मणं = भाल्लवेन प्रोक्तमधीयते भाल्लविनः पुराणप्रोक्तः कल्पः पिङ्गेन प्रोक्तं अधीयते-पैङ्गी (V-3-105).

**तद्धितः** :- शौनकेन प्रोक्तं अधीयते शौनकिनः छन्दस्येव (IV-3-106) अन्यत्र छन्दसः शौनकीया शिक्षा।

**तद्धितः** :- अस्य लुक्। कठेन प्रोक्तं अधीयते कठाः। चरकेण प्रोक्तं अधीयते चरकाः। इदमपि छन्दस्येव। अन्यत्र काठाः (IV-3-107).

**तद्धितः** :- पाराशर्येण प्रोक्तं भिक्षुसूत्रं अधीयते पाराशरिणः। शिलालिना प्रोक्तं नटसूत्रमधीयते-शौलालिनः। सूत्रादन्यत्र पाराशरं, शैलालम् (IV-3-110).

## णुः

**उणादि** :- स्था धातो. स्थाणुः। कीले स्थिरे हरे (317).

**उणादि** :- अजि धातोः अजेर्वी = वेणुः। वृङ् = सम्भक्तौ इत्यस्मात्

वर्णुः = नदः देशविशेषः । री धातोः रेणुः । एभ्यः त्रयेभ्यः नित् स्यात् स्वरे विशेषः (318).

**उणादि** :- विष्लु व्याप्तौ इत्यस्मात् णुः कित् विष्णुः । कित्वेनगुण-निषेधः (319).

# णुकन्

**उणादि** :- पचष्-पाके इत्यस्मात् णुकन् कादेशश्च = पाकुकः (188).

**उणादि** :- णश् अदर्शने इत्यस्मात् नुमागमश्च नंशुकः (188).

# णुट्

आगमः :- "ङमो ह्रस्वादचि" (VII-3-32) सुगण् + ईशः अत्र ईकारात् प्राक् णुट् टकार इत् । उकारः उच्चारणार्थः । टित्वात् ईश इत्यस्याचः आद्यवयवत्वम् । सुगण्णीशः ।।

# ण्यः

**तद्धितः**–प्राग्दीव्यतीयेष्वर्थेषु अपत्यादिषु (IV-1-83) दिति + ण्यः = दैत्यः (IV-1-92) अदिति + ण्यः = आदित्यः । अदित्या + ण्यः = आदित्यम् । पत्युत्तरपदम् = सेनापति + ण्य = सैनापत्यम् । तद्धितेष्वचा (VII-2.117) इति आदिवृद्धिः । भस्येति च (VI-4.148) इति अन्त्या चो लोपः (IV-1-185)

**तद्धितः**–अपत्यार्थे (IV-1-92)कुर्वादिभ्यः । कौरव्यः । गार्ग्यः (IV-1-151)

**तद्धितः** :- अपत्यार्थे-हरिषेण = हारिषेण्यः ।

1. सेनान्तात् प्रातिपदिकात् = कारिषेण्यः ।
2. लक्षणशब्दात् = लाक्षण्यः ।
3. कारि, शिल्प वाचिभ्यः = कुम्भकारः = कौम्भकार्यः तन्तुवायः तान्तुवाय्यः, नापित्यः (IV-1-152)

**तद्धितः**- अपत्यार्थे-कुरु शब्दात् = कौरव्यः । नादि शब्दात् = नैषध्यः ।

ण्यः तद्राजप्रत्ययोऽत्र (IV-1-174)कौरव्यः कौरव्यौ कुरवः (IV-1-172)

**तद्धितः**- चातुरर्थिक संकाशादिभ्यः। सांङ्काश्यम्। काम्पिल्यम् (IV-2-80).

**तिद्धतः** :- समवायात् समवेतीत्यर्थे। परिषदं समवेति = पारिषद्यः (IV-4-44)

**तद्धितः** :- समवायात् समवेतीत्यर्थे। सेनां समवेति सैन्यः। ठगपि। सैनिकः (IV-4-45)

# ण्यत्

**तद्धितः** :- तत्र साधुः इत्यर्थे = परिषदि साधुः पारिषद्यः (IV-4-101)

कृत्यः-ऋदन्तात् धातोः। कृ कार्यं। हृ हार्यं। स्मृ स्मार्यम्। अचोञ्णिति (VII-2-115) इति वृद्धिः ॥ हलन्तात् धातोः। पच्–पाक्यम्। अत्र (अङ्गोपधाभूत) अत उपधाया वृद्धिः (VII-2-116) वृद्धिः। चजोः कु घिण्यतोः (VII-3-52) इति कुत्वम् (III-1-24).

कृत्यः-उवर्णान्तात् धातोः आवश्यके अर्थे द्योत्ये। पु-पाव्यम्। लु-लाव्यम् (III-4-125) अवश्यलाव्यमिति-अन्यत्र लव्यमपि यत्।

कृत्य :-आङ्पूर्वक सुनोति, युवपि रपि प्रभृतिभ्यः आसाव्यम् याव्यम् वाप्यम् इत्यादि (III-1-126).

कृत्य :- आनाय्यः निपातः अनित्ये दक्षिणाग्निविषये (III-1-127)

कृत्य :- प्रणाय्यः चोरः। असंमतौ द्योत्ये निपातः। संमतौ प्रणेयः (III-1-128).

कृत्य :-ण्यन्ता अन्ये निपाताःअर्थविशेषे–

1. पाय्यम्। माङ्-माने–मानम्।
2. सान्नाय्यम्(नीङ्) हविः। आयादेशः, उपसर्गदीर्घः।

कृत् :- निकाय्यः निपूर्वक चिनोतेः आयादेशः, कुत्वञ्च, निवास इत्यर्थः।

कृत् :- धाय्या = सामिधेनी । धेयमन्यत् (III-1-129).

कृत् :- संचाय्यः यज्ञः सञ्चीयते सोमः अस्मिन्निति निपातः । संचयः अन्यः (III-I-130).

कृत् :- निपाताः अग्निः इत्यर्थे । परिचाय्यः, उपचाय्यः, समूह्यः चित्य, अग्निचित्येः ((III-I-131, 132).

तद्धित–:- वयस्याभिधेये षण्मासशब्दात् = षाण्मास्यः (V-1-83).

तद्धितः :– अवयसि–षाण्मास्यो रोगः । केवलमवस्था विशेष द्योतकः (V-1-84) अत्र ठञपि षाण्मासिकः ।

## ण्युट्

कृत् :– गायतेः गायनः । टित्वात् गायनी । थकन् अपि । गायिकः (III–I-146, 147).

कृत् :- हाङ् धातोः, हाङ् धातोश्च व्रीहौ कर्तरि । हायनः । जहात्युदकम् । काले च कर्तरि हायनः । जहाति भावान् वर्षम् (III-I-148).

### ण्विः

कृत् :- सुप्युपपदे भजधातोः ण्विः । अंशभाक् । प्रभाक् । णकारेकारौ इमौ व् इति अपृक्तः तस्य लोपः (IV-1-67&III-2-62).

कृत् :– छ· सुबन्ते उपपदे सहधातोः = तुराषाड् ।

1. सहे साडः सः (VIII-3-56). इति षत्वम् ।
2. तुर शब्दस्य दीर्घः अन्ये (VI-3-135).
3. झलाँ जशोऽन्ते (III-2-39). इति ह्स्य डत्वम् ।
4. वावसाने (VIII-4-55) इति चर्त्वम् (III-2-63).

कृत् :- छ· वहधातोः अपि । प्रष्ठवाट् । दित्यवाट् (III-2-64).

## ण्विन्

कृत् :– मन्त्रे श्वेतवह (III-2-71), अवेयजः (III-2-72) श्वेता एनं वहति (इन्द्रः) श्वेतवाः इत्यादिषु ण्विप्रत्ययस्य डस् इत्यादेशः पदे एव । श्वेतवोभ्याम्, श्वेतवोभिः । भस्य गु श्वेतवाहौ, श्वेतवाहाः ।

## ण्वुच्

कृत् :- 1. पर्याये अर्थे । भवतः शायिका । अद्य भवतः ।

2. अर्हे-इक्षुभक्षिकां अर्हति भवान् ।

3. ऋणे–इक्षुभक्षिकां मे धारयति भवान् ।

4. उत्पत्तौ–इक्षुभक्षिकां मे उदपादि भवान् । पक्षे (I11-3-111)

# ण्वुल्

कृत् :- "भविष्यति काले" क्रियार्थायां क्रियायां उपपदे भोजको व्रजति । तुमुन्नपि भोक्तुं व्रजति (II1-3-10).

कृत् :- धातोः डुकृञ् + णवुल् = कृञ् + अकः, "युवोरनाकौ" (VII-1-1) "अचोञ्णिगति" (VII-2-115) वृद्धिः कारकः (III-1-133).

कृत् :- रोगाख्यायां–प्रच्छर्दिका (III-3-I08).

कृत् :- संज्ञायाम् स्त्रियां उद्दालकपुष्पभञ्जिका (III-3-109).

कृत् :- आख्याने सर्वां कारिकां अकार्षम् ।

कृत् :- परिप्रश्ने कां कारिका मकार्षीः (II-3-110).

# त् (त)

इत् :- फलं "तित् स्वरितम्"(VI-1-185).

सन्नन्तात् यत् = चिकीर्ष्यम् (III-1-97).

"ऋहलोर्ण्यत्" (III-1-124) कार्यम् । प्रत्ययाद्युदात्तस्य (III-1-3) अपवादः । तित् स्वरितः ।

तपरस्तत्कालस्य (I-I-70).

इटोऽत् (II1-4-106) इत्यत्र त् "न विभक्तौ तुस्मा" इति नेत् । किन्तु उच्चारणार्थः एवेति । न विभक्तौ तुस्माः (I-3-4) विभक्तो तवर्गः नेत् वृक्षात् । अभवत्

तिङ् :- परस्मैपदि धातोः ङित् लकारेषु परस्मैपदमिकारान्तं यत् तस्य लोपः । "इतश्च" (III-4-100) तिप् प्रत्ययस्य लङ् । अभवत् । लिङ्

भवेत् । आशीर्लिङ् = भूयात् । लुङ् = अभूत् । लृङ् = अभविष्यत् । लङि भू + झि इत्यत्र झेः अन्तादेशः । शप्,गुणः, अट्, अवादेशः "इतश्चे" ति अभवन्ति इकारलोपः । अभवन् त् संयोगान्तलोपः (VIII-2-23) इति अभवन् इति रूपम् (III-4-100).

# त

**तिङ्** :– परस्मैपदि ङित् लकारेषु मध्यमबहुवचन "थ" इत्यस्य "त" आदेशः । "तस्थस्थमिपां" (III-4-101) लङि अभवत् । लिङि भवेत् । आशीर्लिङि भूयास्त । लुङि अभूत् , लृङि = अभविष्यत ।

**तिङ्** :– आत्मनेपदि ङित् लकारेषु "टित आत्मनेपदानां टेरे इति "एत्वाभावात् ता थो झ इति "त" एव प्रथमैकवचनप्रत्ययः ।

1. लङि आ + एध् + शप् + त = ऐधत ।
2. लिङि = लिङः सीयुट् (III-4-102) इति सीयुडागामः । "लिङः सलोपोऽनन्त्यस्य" इति सलोपः । शप्, यलोपः । एधेत ।
3. आशीर्लिङि "लिङाशिषि" (III-4-116) इति आर्धधातुकत्वात् लिङः सलोपाभावात् "एधिषीष्ट" इति तकारस्य ष्टुत्वम् ।
4. लुङि एधधातोः त इति स्थिते "च्लेः सिच्" इडागमः । आट् आगमः (अजादित्वात्) वृद्धिः, षत्वं, ष्टुत्वं = ऐधिष्ट । लृङि ऐधिष्यत ।

तिङ् :- यूयं लुनीत लुनीतेति लुनीथ । "क्रियासमभिहारे" (III-4-2,3).

तिङ् :- छ. लोट् मध्यमपुरुष बहुवचन "त" इत्यस्य स्थाने तात्, तप् तनप्, तन थन एते आदेशाः भवन्ति । सूर्यं चक्षुर्गमयतात्–गमयत इति प्राप्ते इति (VII-I-44, 45).

तिङ् :-आत्मनेपदप्रथमैकवचन "त" प्रत्ययस्य (III-4-78). लुक् । "चिण परस्य "(VI-4-104) 'दीपजनबुध' (III-1-61). इति षड्भ्यो धातुभ्यः चिण् वा भवति । अप्यायि। पक्षे सिच् । अप्यायिष्ट । किञ्च चिण् ते पदः (III-1-60) इति चिण् विहितः । पदधातोः च्लेः चिण् त शब्दे परे । उदपादि-सस्यम्

प्रत्युपसर्गे तु प्रण्यपादि । अत्र "नेर्गद" (VIII-4-17) इति णत्वम् । अत्र त परे एव उदपादीति । चिणि तस्य लुक् । अन्यत्र न । उदपत्साताम् । समपत्सत ।

·तिङ् :- आदेशः "शदेरगतौ तः" (VII-3-42).

तिङ् :- शदेः धातोः णौ परतः अङ्गस्य तकारादेशो भवति । पुष्पाणि पर्णानि शातयति । गतौ तु शादयति कृष्णः गाः (VII-3-42).

**तद्धितः** :- दशानां दशतां शभावः तश्चप्रत्ययः । शतम् दश दशतः परिमाणमस्य । पङ्क्ति (V-1-59).

**तद्धितः** :- मत्वर्थे कं = जलं, शं = सुखं एताभ्यां कन्तः, शन्तः । अन्ये प्रत्यया अपि (V–2–138).

साधारणो निर्देशः, क्त क्तवतु इति निष्ठावाचकानाम् ।

आदेशः :- अजन्तादुपसर्गात् परस्य "दा" इति घु संज्ञकस्य तकारादौ किति परे "त" इत्यादेशः । प्रत्तः । अवत्तः । नीत्तं । परात्तम् (VII-4-47).

अप्शब्दस्य भकारादौ प्रत्यये परतः = अद्भिः (VII-4-48).

तिङ् :- सकारान्तस्य अङ्गस्य सकारादौ आर्धधातुके परे तः । वत्स्यति जिघत्सति (VII-4-49).

**उणादि** :- हसि तन् (366).

तिङ् :- आदेशः । हनस्तोऽचिण्णलोः (VII-3-32) हन धातोः ञिति णिति परतः "त" भवति । चिण्, णल् वर्जयित्वा । घातयति । घातकः । चिणि तु अघानि । णलि, जघान ।

# तकन्

**उणादि** :- इषि, इष्टका । अशि = अष्टका (428).

# तङ्

**प्रत्याहारः** :- लस्य (III-4-77) तिप् तस् झि (III-4-78) लादेशाः परस्मैपदिनः इति "लः परस्मैपदम्" (I-4-98) इत्युक्तम् । तस्यापवादः ।

तेषु 'तङ्' इति प्रत्याहारगता प्रत्यया आत्मनेपदसंज्ञाः स्युः । तथा आन इति सामान्यनिर्देशेनोक्तौ शानच् कानचौ च (1-4-99).

तिङ् :- तस्थस्थमिपां तांतं तामः (III-4-101) इति लोटि थस्य यः तः आदेशो विहितः तस्य छन्दसि तङ इति वा । यत्र तङ् आदेशः तत्र दीर्घविधिस्तङ् । ऋचि तुनु (VI-3-133) भरता जातवेदसम् । यत्र तङ् नास्ति तत्र "त" एव । शृणोत ग्रावाणः । अत्र तङभावात् दीर्घोऽपि न ।

# तण्

संज्ञा :- बहुलं तणीति वक्तव्यम् । किमिदं तणीति । संज्ञा छन्दसोर्ग्रहणम् । महाभाष्यम् (II-4-51) सूत्र (वा) (III-2-8) (वा)(IV-I-52) वा

# तद्राजाः

संज्ञा । तद्राज संज्ञका प्रत्ययाः (IV-1-172) ये प्रत्ययाः जनपद (IV-1-168) इत्यारभ्य (IV-1-171) पर्यन्तं अञ् । अण् । ञङ् । छ ञ्युट् ण्यरण्यणउक्त ते तद्राजसंज्ञकाः । बहुवचने एषां लुक् भवति । तद्राजस्य बहुषु तेनैवास्त्रियाम् (II-4-62) पाञ्चालः पाञ्चालौ पंचालाः । तद्राजप्रत्ययानां कम्बोजाल्लुक् (IV-1-175) इत्यारभ्य "अतश्च" (IV-1-177) पर्यन्तं लुक् भवति कबोजानां अपत्यं कम्बोजः । प्रत्ययलक्षणं न ।

त. पूगाञ्ञ्योऽग्रामणीपूर्वात् (V-3-112) इत्यारभ्य-आभिजित्(V-3-118) पर्यन्तं ये ञ्य, चफञ्, ञ्युट्, टेण्यण्, छ, अण्, अञ्, यञ्, प्रत्यया प्रकृति विशेषेभ्यो विहिता तेऽपि तद्राजसज्ञका ञ्यादयः तद्राजाः (V-3-119).

# तन्

उणादि :- हसि तन् इट् निषेधः । (366) हस्तः हसिता (VII-2-9).

# तन

छ. त इत्यस्य तनादेशः जुजुष्टन । जुषतेति प्राप्ते (VII-1-45)

# तनन्

उणादि :- वीपतिभ्याम् वेतनम्, पत्तनम् (430).

# तनप्

छ. "त" इत्यस्य तनबादेशः दधातन धत्त इति वक्तव्ये (VII-1-45).

तद्धितः :- नवस्य नू तनप् प्रत्ययः नूतनं (वा) (V-4-25).

# तप्

छ. मत्वर्थे तप् पर्वमरुद्भ्यां (वा) = पर्वतः। मरुत्तः। "बहुलं छन्दसि" (V-2-122) काशिका।

छ. श्रुणोत ग्रावाणः। श्रुगुत इति प्राप्ते (VII-1-45).

# तम्

तिङ् :- लोटि "थस्" इत्यस्य तम् = कुरुतम् (III-4-101).

# तम

साधारण्येन तमट् तमपोः निर्देशः।

# तमट्

तद्धितः :- "तस्य पूरणे" (V-2-48) इत्यर्थे डट् इत्यस्य तमट् आगमः विंशत्यादिभ्यो वा = विंशतितमः। पक्षे विंशः (V-2-56).

तद्धितः :- तमट् आगमः। शतादिभ्यः नित्य-पूरणार्थे यः डट् तस्मात्। शततमः शतस्य पूरणः। मासस्य पूरणो मासतमो दिवसः (V-2-57).

त. तमट् आगमः। षष्ठ्यादेश्चासंख्यादेः नित्यम्। षष्ठितमः। सप्ततितमः। विंशत्यादिभ्यः-प्राप्तो विकल्पः (V-2-56) अत्रषष्ठ्यादेः नित्यं इति तेन संख्यादेः षष्ठ्यादेः डट् आगमः तमट् विकल्प एव। एकषष्टिः एकषष्टितमः (V-2-58).

## तमप्

**त**· अतिशयेन दर्शनीयतमः (V-3-55) तिङश्च । पचति तमाम् = अयमेषां अतिशयेन पचति (V-3-56).

## तयप्

**त**· संख्याया अवयवे । पञ्चतयम् । शततयम् । "चतुष्टयी नामाख्यातोपसर्गनिपातेति शब्दानां प्रवृत्तिः" । महाभाष्यम् । अत्र चतुर + तयप् इदुदुपधस्य चा (VIII-3-41) इति विसर्जनीयस्य षत्वं । ष्टुना ष्टुः इति ष्टुत्वम् । "टिड्ढाणञ्" (IV-1-15) इति ङीप् चतुष्टयी (V-2-42).

(तय) द्वित्रिभ्यां तयस्यायज्वा (V-2-43) द्वयम् पक्षे तयप् । द्वितयम् । एवं त्रयं । त्रितयम् ।

उभादुदात्तो नित्यम् तयपस्थाने अयज् नित्यम् । उभये देवमनुष्याः (V-2-44)

## तरप्

**त**· द्विवचन विभज्योपपदे (V-3-57)

**त**· तरप् तमपौ घः-संज्ञा. (I-1-22)

## तल्

**त**· तस्य भावस्त्वतलौ । लघुता लघुत्वम् । भावार्थे तल् स्त्रियां टाप् (V-1-119) स्वार्थे देवतात् देवता (V-4-27).

**तद्धितः** :- समूहार्थेः । ग्रामाणां समूहो ग्रामता । जनानां समूहः जनता । वन्धुता । टाप् (IV-2-42)

## तव

**आदेशः** युष्मदस्मदोः मपर्यन्तस्य ङसि परतः । तव । मम । अतितव (VII-2-96)

# तवे

कृत् :- छ. दशमे मासि सूतवे "तुमर्थे" (III-4-9)

# तवेत्

कृत् :- छ. गन्तवे तुमर्थे (III-4-9)

# तवै

कृत् :- छ. सोममिन्द्राय पातवै, तुमर्थे (III-4-9) अस्य तवै प्रत्ययस्य अन्तश्च आदिश्च युगपदुदात्तौ भवतः । कर्तवै । हर्तवै (VI-1-200.)

कृत् :- "कृत्यार्थे तवैकेन् केन्यत्वनः" (IV-4-14) छ. अन्वेतवै अन्वेतव्यम् परिधातवै परिधातव्यम् । छन्दसि ।

# तव्य (तव्यत्)

कृत् :- कर्तव्यम् (III-1-96).

कृत् :- कर्तव्यम् स्वरे विशेषः (III-1-96)

# तसिः

त. तेनेकदिक् (IV-3-112) इत्यर्थे वारणासीतः ।

त. उरसः एकदिक् इत्यर्थे उरस्तः । यदपि । उरस्यः (IV-3-114).

त. प्रतिः प्रतिनिधिप्रतिदानयोः (1-4-92) इति कर्मप्रवचनीयसंज्ञक प्रतिना योगे या पञ्चमी प्रतिनिधि प्रतिदाने च यस्मात् (II-3-11) इत्यनेन भवति तादृशपञ्चम्यन्तात् तसिः भवति वा । प्रद्युम्नो वासुदेवतः प्रति पक्षे प्रद्युम्नो वासुदेवान् प्रति "स्नौजस" (IV-1-2) इति शीङःसिः । वासुदेवतः इत्यत्र तद्धितश्च (I-1-38) इति अव्ययसंज्ञा । सुपो धातुप्रातिपदिकयोः (II-4-71) इति सुपो लुक् ।

तद्धितः :- अपादाने या पञ्चमी तदन्तान् तसिः वा । अहीयरुहोः । चोरतो

बिभेति । चोरात् बिभेति । हीयते इत्यस्मात् न सर्पात् हीयते । जिहीतेः मा भूत् । भूमितः उज्जिहीते । रुहधातोरपि पर्वतादवरोहति ।

त. तृतीया विभक्त्यन्तात् वा तसिः-

1. अतिग्रहे-वृत्तेन अतिगृह्यते वृत्ततोऽतिगृह्यते । सुष्ठु वृत्तवान् अन्यान् अतिक्रम्य वृत्तेन गृह्यते ।
2. अव्यथने । वृत्तेन न व्यथते, वृत्ततः न व्यथते ।
3. क्षेपे चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः । "अकर्तरि" इत्येव। कर्तरि तु न तसिः । देवदत्तेन क्षिप्तः (V-4-46)

त. हीयमानयोगे-वृत्तेन हीयते वृत्ततो हीयते । चरित्रेण पापः चरित्रतः पापः (V-4-47)

त. षष्ठी विभक्त्यन्तात् प्रातिपदिकात् व्याश्रये भिन्नाश्रये । देवा अर्जुनतो अभवन् । आदित्याः कर्णतोऽभवन् (V-4-48)

त. अपनयने प्रतीकारे रोगात् चिकित्सायां-कासतः कुरु । हिक्कातः कुरु (V-4-49).

त: "प्रतियोगे पञ्चम्याः तसिः" (V-4-44) अपादाने चाहीयरुहोः (V-4-45) इति यः तसिः तत्स्थाने तसिल् भवति । किं सर्वनाम, बहुभ्यः आद्यादिभ्यः । कुतः । यतः । ततः । बहुतः । तसिलादेशे लिति च इति (VI-1-187) स्वरविशेषः (V-3-8)

# तसिल्

त. 1. पञ्चम्याः किं सर्वनाम (V-3-2)इत्येतेभ्यः कुतः। यतः। ततः। बहुतः (V-3-7)

2. तसेश्च (V-3-8)

3. पर्यभिभ्यां च (V-3-9) परितः । अभितः ।.

त. तसिलादिष्वाकृत्व सुचः (VI-3.35) पञ्चम्यास्तसिल् (V-3-7) इत्यारभ्य क्रियाभ्यावृत्तिगणने कृत्वसुच् (V-4-17) ये प्रत्ययाः तेषु परेषु भाषितपुंस्कात् अनूङ् स्त्रियाः पुंवत् भवति । तस्याः शालायाः ततः (VI-3-35).

त. तसिलादि तद्धित प्रत्ययान्ता: शब्दा: येभ्य: सर्वविभक्तिर्नोत्पद्यते ते अव्ययसंज्ञका भवन्ति । तद्धितश्चासर्वविभक्ति: (I-1-38) यत: पञ्चमी यत्र षष्ठी अन्ये च यदा सदा इत्यादय: अव्ययानि । तद्धितान्ता येभ्य: सर्वविभक्तिरुत्पद्यते, ते सुबन्ता: = औपगव: औपगवौ औपगवा इत्यादय: ।

# ता

त. तत्र् प्रत्ययस्य सामान्यं स्त्रीलिङ्गरूपम् ।

# तात्

तिङ् :- छ· तस्य तात् (VII-1-44) खनतात् = खनत इत्यस्य ।

# तातङ्

तिङ् :- तुह्योस्तातङ् (VII-1-35) आशिषि विषये तु प्रथमैक-वचनम् । जीवतात् जीवतु । जीवहि मध्यमैकवचने जीवतात् । जीव ।

## तातिल्

तद्धित: :- स्वार्थे छ सर्वतातिः । देवताति:, (IV-4-142)

तद्धित: :- स्वार्थे छ शिवतातिः, शन्तातिः, अरिष्टताति: (IV-4-143)

तद्धित: :- छ प्रशंसार्थे ज्येष्ठताति: (V-4-41).

तद्धित :- भावे छ शिवस्य भाव: शिवताति: इत्यादि (IV-4-144)

## तादृक्

तद्धित .- पश्य आ तादृश: । आसर्वनाम्न: (VI-3-91).

# ताम्

तिङ् :- तस्थस्थ (III-4-85&III-4-101)

# तासि

तिङ् :- लुट् लकारे परत:- धातो: तास् । शबाद्यपवादोऽयम् । भविता (III-3-33)

**तिङ्** :- तसेः परं लसार्वधातुकं अनुदात्तं स्यात् कर्ता (VI-1-186)

**तिङ्** :- उपदेशे यो अच् तदन्तानां हनादीनां तसिपरतः भावकर्मणोः चिणीवाङ्गकार्यं वा स्यात्। इडागमोऽपि चिण्वद्भावसन्नियोगशिष्टः। भाविता, भविता। स्यसिच् सीयूट्सु परेष्वपि (VI-4-62)

# तिः

**तद्धित** :- स्त्री यूनस्तिः (IV-1-77) युवन्+ति स्वादिष्वसर्वनाम-स्थाने इति तिप्रत्यये परतः युवन् इत्यस्य पदत्वम्। न लोपः प्राति (VIII-2-7) इति न लोपः = युवतिः।

**तद्धित** :- तदस्य परिमाणम् (V-1-57) इत्यर्थे पञ्चन् इत्यस्मात् तिप्रत्ययः टिलोपश्च निपात्यते। पञ्च्+ति = कुत्वं = पंक्तिः = पञ्च-परिमाणं अस्य। एवं षष्+ति = षष्टिः, षट् दशतः परिमाणमस्य (V-1-59)

**तद्धित** :- "तस्य मूले" (V-2-24) इत्यर्थे पक्षात् ति = पक्षतिः = पक्षस्य मूलम् प्रतिपत् तिथिः (V-2-25).

**कृत्** :- इडागमनिषेधः तितु (VII-2-9) तन्तिः। तनिता।

**तद्धित** :- मत्वर्थे कश शब्दाभ्यां कन्तिः, शन्तिः। अन्ये च प्रत्ययाः बभादयः (V-2-138)

**तद्धित** :- "ति विंशतेः डिति" (VI-4-142) डिति परतः तिलोपः विंशत्या क्रीतः विंशकः। डित् प्रत्ययाभावे = विंशत्या।

**उणादि** :- वसेस्तिः वस्तिनाभेरथोदेशः। वस्तिः दशासूत्रम् (619)
सौ असेः = स्वस्ति = अव्ययम् 620
वौ तसेः = वितस्तिः (621)
पद = पत्तिः प्रथि प्रथितिः तिः नित्। दृतिः ह्रस्वः (623)

# तिकन्

**उणादि** :- वृतेस्तिकन्। वर्तिका-426
स्वार्थे मृदेव मृत्तिका (V-4-39)

# तिङ्

तिङ् :- प्रत्ययानां प्रत्याहारः लादेशः (III-4-78).
स्वर सर्वनिघातः तिङङतिङः (VIII-1-28).

# तित्

तित् स्वरितम् (VI-2-185).

# तिथुक्

तद्धित :- तस्य पूरणे (V-2-48)इत्यर्थे बहुगण (V-2-52) बहुतिथः ।

# तिप्

तिङ् :- तिप्तस्झि प्रथमपुरुषैकवचनप्रत्ययः (III-4-78).
परस्मैपदानां (III-4-82).
विदो लटो वा (III-4-83).
ब्रुवः पञ्च (III-4-84).
(लोपः) हल्ङ्याप्भ्यो (VI-1-68).

# तिरि

तद्धितः :- तिरस् इत्यस्य "तिरि" इत्यादेशः भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे-अलोपे-तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । अलोपाभावे तिरश्चा तिरश्चे (VI-3-94).

# तिल्

तद्धितः :- छ प्रशंसाविशिष्टार्थे = वृकतिः(V-4-41)

# तिसृ

आदेशः :- सुप् "त्रिचतुरोः स्त्रियां तिसृ चतसृ (VII-2-99).

# तीय

**तद्धित** :– "पूरणे" द्वि प्रातिपदिकात् षष्ठी समर्थात् द्वितीयः (V–2–54)

**तद्धित** :– त्रिप्रातिपदिकात् सम्प्रसारणमपि = तृतीयः त्रि + तीय–तृ + इ + तीय संप्रसारणाच्च (VI-1-108) तृतीयः (V-2-55).

**तद्धित** :– पूरणात् भागे तीयादण् (V–3–48) द्वेस्तीयः (V-2-54). इति सूत्रेण द्वितीय इति रूपं भवति। तस्मात् अन्। अनि कृतेऽपि द्वितीय इत्येव। रूपसाम्येऽपि स्वरे भेदः। ञ्नित्या (VI-1-191)इत्यनेन (V-3-48).

**प्रत्याहारः** :– तवर्गः "अणुदित्सवर्णस्य चाप्रत्ययः (I-1-69).

# तु

**प्रत्ययः** तिङ् एरुः (III-4-86) = भवतु। तुह्योस्तातङ् आशिषि-भवतु-भवतात् (VII-1-35).

**तद्धित** :– मत्वर्थे कन्तुः शन्तुः (V–2–138).

तितु त्रस (VII-2-9) इडागम निषेधः। सेतुः, सक्तुः. सचिता। सितनिग तृत् उणादि सूत्रम् (69) काशिका

**उणादि** :– जनेस्तु रश्च = जर्तुः, हस्ती, योनिश्च (724).

**उणादि** :– अर्तेश्च तुःकित् = ऋतुः (71).

# तुक्

**आगमः** :– 1. ह्रस्वस्य पिति कृति तुक् (VI-1-71).

प्रकृत्य

2. संहितायां छे परे तुक्-तच्छिवः (VI-1-73).
3. आङ्माङोश्च ईषच्छाया (VI-1-74)मा च्छैत्सीत्
4. दीर्घात् ह्रीच्छति-म्लेच्छति (VI-1-75).
5. पदन्तात् वा। लक्ष्मीच्छाया-लक्ष्मीछाया।

**आगमः** :– शितुक् भावात्र्च्छेते (VIII-3-31).

**निपातः** :– चित्याग्निचित्ये च। यकारप्रत्ययः तुक् च निपात्यते

(III-1-132).

**कृति** :– नलोपः सुप्स्वरसंज्ञातुक्विधिषु कृति (VIII-2-2) प्रातिपदिकस्य पदस्य अन्त्यो यो नकारः तस्य लोपः। अयं नलोपः पूर्वत्रासिद्धः। सुप् विधौ संज्ञाविधौ स्वरविधौ कृति तुक्विधौ। तत्र तुक् विधौ = वृत्रहभिः इत्यत्र वृत्रहन् शब्दस्य स्वादिष्वसर्वनामस्थाने (1-4-17) इति पदत्वम्। "नलोपः प्रातिपदिकान्तस्य" (VIII-2-7) इति नलोपः। स असिद्धः। तस्मात् ह्रस्वस्य पिति कृति तुक् न।

वृत्रं हन्तीति "ब्रह्मभ्रूणवृत्रेषु क्विप्" (III-2-87) ब्रह्मन् + हन् + क्विप् ब्रह्मादिषु कर्मसूपपदेषु हन् धातोः भूते हतवान् इत्यर्थे क्विप्। क्विप् च (III-2-76) इत्यपि। एवं वृत्रहशब्दः कृदन्तः। क्विबयं कृत् च पिच्च एवं भूते-ह्रस्वे भि परतः प्राप्तः तुक् न। नलोपस्य असिद्धत्वात्। वृत्रहन् + भिः वृत्र + ह + न् + भिः तुक् न, वृत्रहभिः।

## तुट्

आगमः :– ट्यु ट्युल् प्रत्यययोः सायन्तनम्। अपराह्णेतनम् (IV-3-23,24).

आगमः : –कालवाचिनः श्वस् प्रातिपदिकात् विकल्पेन शैषिकः ठञ् भवति। तस्य तुट् आगमः = शौवस्तिकः। पक्षे त्यप् (IV-2-104) ऐषमोह्यः श्वस्त्यः = सायं चिरं (IV-3-34).

आगमः :– छ. भूरिदावनः। भूरिदावत्तरः (वा)(VIII-2-17) इति ट्युट्युलावपि। श्वस्तनः (IV-3-15).

## तुन्

**उणादि** :– सितनिगमि तुन् = सिनोति = सेतुं, तनोति = तन्तु = तितुत्रत (VII-2-9) मस्तु दधि मंडम् (69).

**उणादि** :– क्रमि वृद्धिश्च–क्रान्तुः पक्षी। गान्तुः पथिकः। क्षान्तुः = मशकः (721).

**उणादि** :– वसेः वस्तुः (75).

## तुमुन्

**कृत्** :- तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्। भोक्तुं याति, भोजको याति (III-3-10).

**कृत्** :- कालसमयवेलासु (III-3-167) कालः समयो वेला वा भोक्तुम्।

**कृत्** :- 1. समानकर्तृकेषु (III-3-158) इच्छार्थेषु। एककर्तृकेषु उपपदेषु धातोः तुमुन्–इच्छति भोक्तुम्।

2. शकधृषाद्युपपदेषु अपि एककर्तृकेषु-शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। अस्ति भोक्तुम्। भवति भोक्तुम् (III-4-65).

3. पर्याप्तिवचनेषु = सामर्थ्यवचनेषु = पर्याप्तः भोक्तुम् (III-4-66).

4. अत्र वासरूपविधिर्नास्ति। स्त्रियाः प्रतिषेधे क्तल्युट् तुमुन् खलर्थेषु विभाषाप्रसङ्गः इति (III-1-94) वार्तिकम्।

## तृ

आदेशः :– अर्वन् इति शब्दस्य नञा रहितस्य अङ्गस्य तृ इत्यादेशः सौपरे न अर्वन्तौ अर्वन्तः। तृ इत्यादेशेन अर्वन् इत्यस्य उगित्वं तेन नुम्। नञि अनर्वा सौ अर्वा (VI-4-127).

**तद्धितः** :– तु छन्दसि (V–3_59) त्रन्तात् (तृ अन्तात्) छन्दसि अजादी प्रत्ययौ इष्टन् ईयसुनौ भवतः। तृ इत्यनेन तृच् तृन् इत्यादीनां ग्रहणम्। आसुति करिष्ठः कर + तृ + इष्ट = तुरिष्ठे मेयस्सु (VI-4-154) इति तृलोपः। करिष्ठः। एवं दोहीयसी धेनुः। दुहं + तृ = दोहि + तु = ईयसुन् तृलोपः। दोहीयसी।

## तृच्

**कृत्** :- ण्वुल् तृचौ। तृच् = कर्ता (III_1-133) ऋन्नेभ्यः इति ङीप् कर्त्री (IV_1-5).

**कृत्** :– अर्हे कृत्यतृचश्च (III-3-169) चकारात् लिङ् लकारोऽपि।

1. कृत्य-भवता विद्या पठितव्या पाठ्या, पठनीया।

2. तृच् भवान् पठिता (तृच्) विद्यानाम् ।
3. लिङ् भवान् विद्यां पठेत् ।

## तृच्, तृन्

**उणादि** :- 1. शंस्ता , क्षत्ता (250) तृच् तृनोः स्वरे विशेषः ।
2. बहुलमन्यत्राऽपि–मन् = मन्ता । हन् = हन्ता (251).
3. "नप्तृनेष्टृ" न पतन्ति पितरो नरके अनेन इति नप्ता (252).

**कृत्** :- तृन् (III-2-135) ताच्छील्ये ।

1. सर्वधातुभ्यः कर्ता कटान् ।
2. ऋत्विक्षु तृन् विधौ अनुपसर्गे एव (वा) होता । पोता । उद्गाता इत्यत्र तृच् न तृन् ।
3. नयतेः षुक् (वा) नेष्टा ।
4. त्विष धातोः तृनि उपधाया अकारः । त्वष्टा (वा) ।
5. 1. ताच्छील्यं = कटकरणक्रियाशीलः = कर्ता कटान् ।
   2. तद्धर्मत्वं–श्राविष्ठायनाः मुण्डयितारः वधूम् ।
6. तृन्नन्तेन षष्ठी समासनिषेधः । "न लोकाव्यय" (II-3-69) तृन्निति प्रत्याहारे तृन् प्रत्ययस्यान्तः पातः ।
7. तृन्नन्तस्य तृजन्तस्य च दीर्घः (VI-4-11).

# ते

तिङ् :- टित आत्मनेपदानां टे रे (III-4-79) एधते । नयसे । क्रियते ।

# तैलच्

तद्धितः :- स्नेहे तैलच् (वा) सम्प्रोदश्च (V-2-29) तिलतैलम् । सर्षपतैलम् ।

# तोसुन्

कृत् :- तुमर्थे ईश्वरे तोसुन् कसुनौ (III-1-63) ईश्वरशब्दे उपपदे छ.

तोसुन् कसुन् ईश्वरो विलिखः । ईश्वरः विलिखितुम् अव्ययत्वं क्त्वातोसुन् (I-1-40).

# त्नः

**तद्धित** :– चिरपरुद्भ्यः (वा) चिरत्नम्। परुत्नम् । परारित्नम् । सायं चिरं (IV-3-23) सूत्रे (वा)

# त्न

**उणादि** :– च्युङ् च्युतो इति धातोः च्यौत्नः = गन्ता । अण्डजः क्षीणपुण्यश्च–544

# त्नप्

**तद्धित** :– नवस्य नू आदेशः त्नप् तनप् खाश्चप्रत्ययाः वक्तव्या (वा) (V-4-25). नूत्नम् । नूतनम् । नवीनम् ।

# त्यः

**तद्धित** :- त्यक् त्यप् इत्यादीनां साधारणो निर्देशः

# त्यक्

**तद्धितः**- "शेषे" दक्षिणा, दक्षिणात्यः (IV-2-98)

# त्यकन्

**तद्धित** :- आसन्नइत्यर्थे उप इति शब्दात् = उपत्यका = अद्रेरासन्न भूमिः ।

**तद्धित** :- आरूढ इत्यर्थे "अधि" इति शब्दात् = अधित्यका = अद्रेरूर्ध्व भूमिः (V-2-34).

# त्यप्

**तद्धित** :– "शेषे" अव्ययात् (IV-2-104) वार्तिकानि

(1) अमा अव्ययम्-अमात्यः। इहत्यः। क्वत्यः। इतस्त्यः। तत्रत्यः।

यत्रत्यः ।

(2)अत्रविकल्पः = ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । तुट् च शौवस्तिकम् । (IV-2-105).

# त्युक्

**उणादि** :- मृङ् प्राणत्यागे (IV-3-15) इत्यस्मात् त्युक् = मृत्युः (301)

# त्रः

**कृत्** :- धयतेः दधातेश्च धातोः ष्ट्रन् कर्मणि । धयन्ति यां औषधार्थं धात्री । षकार ङीबर्थं ष्टुत्वम् धात्री स्तनदायिनी आमलकी च (III-2-181)

**कृत्** :- दाप् नीञः इत्यादिधातुभ्यां करणे दात्रम् = दान्त्यनेनेति । (III-2-182).

**कृत्** :- पूङ् पूय् धात्वोः करणे ष्ट्रन् । तच्चेत् करणं हलस्य सूकरस्य चावयवो भवति । पोत्रम् । हलस्यावयवविशेषः पोत्रम् सूकरस्य पोत्रम् मुखम् (III-2-183)

**तद्धितः** :- तस्य समूह इत्यर्थे (IV-2-37) गो शब्दात् = गोत्रा (IV-2-51)

**तद्धितः** :- इट् निषेधः । तितुत्रस (VII-1-9)

# त्रयस्

**आदेशः** :- त्रि इत्यस्य संख्यायाम् । अबहुव्रीह्यशीत्योः ।

1. त्रयोदश, त्रयोविंशतिः त्रयस्तिंशत् संख्यायामेव नान्यत्र । त्रिमातुरः (VI-3-48)

2. चत्वारिंशत् प्रभृतौ विभाषा । त्रिपञ्चाशत् । त्रयः पञ्चाशत् (VI-3-49)

# त्रल्

**तद्धितः** :- सप्तम्याः त्रल् किंसर्वनामबहुभ्यः । कुत्र तत्र बहुत्र (V-3-10)

# त्रा

**तद्धित:** :- तदधीनवचने (V_4-54) कृभ्वस्तियोगे । ब्राह्मणत्रा करोति ब्राह्मणत्रा स्यात्, ब्राह्मणत्रा भवति । सातिश्च । ब्राह्मणसात् करोतीत्यादि (V-4-55)

**तद्धित:** :- देवमर्त्यादिषु द्वितीया सप्तम्यो: त्रा बहुलम् । देवान् गच्छति देवत्रा गच्छति । देवेषु गच्छति । देवत्रा गच्छति (V_4-56),

# त्रिनि:

**उणादि** :-अत्रे: अत्री । अत्रिणौ । अत्रिण: (508)

# त्रिप्

**उणादि** :- राशदिभ्याम् = रात्रि: । शत्रि: = कुञ्जर: (507)

**उणादि** :- अदे: = अत्रि: । अत्री । अत्रय: (508)

# त्व

**तद्धित:** :- षष्ठीसमर्थात् भावकर्मणोरर्थयो: ब्रह्मन् प्रातिपदिकात् = ब्रह्मत्वम् ब्रह्मणो भाव: ब्रह्मण: कर्म वा (V-1_136)

**तद्धित:** :- तस्य भाव: (V-1_119)ब्रह्मत्वं ब्रह्मभाव: "तल्" अपि (V-1-119)

**तद्धित** :- त्व तलो: गुणवचनस्य पुंवद्भावो वक्तव्य: (वा) तसिलादिषु (VI-3-35)-पट्व्या भाव: पटुत्वं पटुता । गुणवचनभावे कठीशब्द: कठीत्वं कठीतो ।

**आदेश:** :- युष्मद् शब्दस्य मपर्यन्तस्य सौ परे त्व इत्यादेश: । त्वम् परमत्वम्, अतित्वम् (VII-2-94)

# त्वन्

**उणादि** :- दा-दात्वो: = दाता (544).

कृत् :– छन्दसि कृत्यानामर्थे = भावकर्मणोः तवै प्रभृतयः प्रत्ययाः तत्र त्वन् इत्यपि कर्त्वं हविः कर्तव्यमित्यर्थः (III-4-14).

## थ

इत्·

आदेशः :– आह इत्यस्य ह्स्य थादेशः झलि । आत्थ (8-2-35).

तिङ् :– लादेशः मध्यमपुरुषबहुवचनम् "तिप् तस् झि" (III-4-78).

इडागमनिषेधः । काष्ठम् अन्यत्र काशिता "तितुत्र" (VII-2-9).

## थक्

उणादि :- पातॄ तॄ = पीथो = रविः । पीथो = घृतम् (164).

## थकन्

कृत् :– गस्थकन् । गायकः (III-1-146)

## थन्

**उणादि** :– उषिकुषि (161) ओष्ठः । कोष्ठम् ।

**उणादि** :- हनि कृषि (159) हथः कृष्ठः

## थन

तिङ् :– तशब्दस्य लोट् मध्यमपुरुषबहुवचनस्य छन्दसि थन इत्यादेशः । अन्येप्यादेशाः । यदिष्ठन । यदिच्छतेति प्राप्ते (VII-1-45).

## थमुः

तद्धितः :– प्रकारवचने (V-3-23) इदं शब्दात्–इत्थम् । एतत् शब्दात् (वा) इत्थम् एतेन प्रकारेण (V-3-24).

तद्धितः :– किं शब्दात् केन प्रकारेण कथम् (V-3-25).

## थल्

तिङ् :– लिट् आदेशः परस्मैपदमध्यमपुरुषैकवचन-सिप्रत्ययादेशः

पेठिथ–सेट् (III-4-82).

## थस्

तिङ् :- लादेशः मध्यमपुरुषद्विवचनं भवथः (III-4-78).

## था

तद्धितः :– हेतौ छ· (V-3-26) कथा पुराविद आसन् (V-3-26).

## थाल्

तद्धितः:– प्रकारवचने-तेन प्रकारेण तथा, यथा (V-3-23).

तद्धितः :- इवार्थे, प्रत्नथा, प्रत्नादिभ्यः छन्दसि (V-3-111).

## थास्

तिङ् :- मध्यमपुरुषैकवचनं आत्मने एधथाः (III-4-78) लङ् एध थास् शप्, आट् वृद्धिः = एधथाः ।

तिङ् :- टित् लकारे लटि । थासःसे = एधसे (III-4-80).

## थुक्

आगमः :- पूरणार्थे चतुर्थः, कतिपयथः डट् प्रत्ययः (V-2-51).

तिङ् :- लुङ् लकारे च्लेः यः अङादेशः तस्मिन् परे अस्यतेः थुक् = आस्थत् । आस्थताम् । आस्थन् (VII-4-17).

## थ्यन्

तद्धितः :– तस्मै हितमित्यर्थे (V-1-5) अवि-अविथ्या। अज–अजथ्या (V-1-8).

## द

इत् :-

आदेशः :- वस्वन्तस्य सकारान्तस्य पदस्य स्रंस्वादीनां च दादेशः ।

विद्वद्भ्याम् । विद्वद्भिः (VIII-2-72).

**उणादि** :- शाधातोः शारो जम्बाल शष्पयोः (537).

**आदेशः** :- तिप्यनस्तेः (VIII-2-73) पदान्तस्य सस्य दः तिपि न असधातोः । लङि लकारे, तु अ + चकास् + त इति स्थिते "वसुस्रंसु" (VIII-2-72) इति सस्य दः । हल्ङ्यादि लोपः । अचकान्-अचकाद् । लङि अस्तेः अस्ति सिच् (VII-3-96) इति ईडभावे, हल्ङ्यादि लोपे, (VI-1-168) आ इति रूपम् ।

**आदेशः** :- ककारान्तस्य अव्ययस्य अकच् (V-3-71) **सन्नियोगेन** दकारदेशः । धिक् । धकित् । हिरूक् । हिरकुत् । पृथक् । पृथकत् (V-3-72).

# दत्

दा इति घुसंज्ञक धातोः तकारदौ किति परतः दत् इति आदेशः । दा + क्त = दत्तः । क्तवतु = दत्तवान् । क्तिः = दत्तिः । (VII-4-46).

# दतृ

**आदेशः** :- वयसि दन्तस्य दतृ । द्वौ दन्तौ अस्य = द्विदत् । अनेकाल्त्वात् दन्तस्य स्थाने दतृ इति आदेशः । द्विदत्-उगित्वात् = उगिदचां (VII-1-70) इति नुम् । द्विद + न् त् + सु, संयोगान्तस्य लोपे हल्ङ्यादि लोपे द्विदन् (V-4-141) छ बहुव्रीहौ पत्रदन्तमालभेत (V-4-142).

**आदेशः** :- स्त्रियां **संज्ञायाम्** = अयोदति फालदति (V-4-143)

**आदेशः** :- वा श्यावा दन्ता यस्य = श्यावदत् । श्यावदन्तः । अरोको = **मलिनदन्ताः** । अरोकदत् । अरोकदन्तः (V-4-144).

**आदेशः** :-विभाषा । सुभ्रदन् । सुभ्रदन्तः । वृषदन्, वृषदन्तः इत्यादि (V-4-145).

# दघ्नच्

**तद्धितः** :-प्रमाणे ऊरूदघ्नी नदी (V-2-37)

हस्ति दघ्नम् । अण् च हास्तिनम् (V-2-38).

# दन्

**उणादि** :- शप् धातो: शब्द:-537.

# दा

**तद्धित:** :- कालसप्तम्यर्थे कदा सर्वस्मिन् काले सर्वदा । यदा । कदा । अन्यदा । **सर्वैकान्य:** (V-3-15).

**तद्धित:** :-तत् शब्दादपि । तदा (V-3-19).

**तद्धित:** :- इदं शब्दात् छन्दसि । "इदम इश्" (V-3-3) इह (V-3-20).

**तद्धित-** -: किंसर्वनामबहुभ्य: वा कदा तदा: । पक्षे कर्हि तर्हि (V-3-2.).

# दानीम्

**तद्धित:** :- इदं शब्दात् काले वाच्ये सप्तम्यन्तात् = इदानीं । पक्षे दा (V-3-20)इदा (V-3-18)

**तद्धित:** :- एवं तत् शब्दात् । तदानीम् (V-3-19).

## दिगि

**तिङ्** :- लिटि दयते: । दिग्ये (VII-4-9)

## दिव्

**आदेश:** :- समासे उत्तरपदे दिव: द्यावा इत्यादेश: । द्यावापृथिव्यौ द्यावाभूमी (V I-3-29)

## दुञ्

**आगम:** :- अन्य-अन्या आस्था अन्यदास्था अन्यदर्थ: (VI-3-99,100).

## दुर्हद्

**आगम:** :- शत्रुविषये सुहृद् दुहृदौ (V-4-150)

**समासान्त:** :- द्रुर्हृद् शत्रु: ।

## दूसम्

**आदेश:** :- दुग्धमित्यस्य अवे:-दुग्धम् = अविदूसम् तथा अविसोढम्

अविमरीसम् वा "पितृव्य" (IV-2-36).

## देशीयर्

तद्धितः :- ईषदसमाप्तौ पटुदेशीयः । पचतिदेशीयम् ।

## देश्यः

तद्धितः :-पटुदेशीयः। (V-3-67, 68)

## द्यः

तद्धितः :- इदमः अश् भावः द्यप्रत्ययश्च । अद्य काशिका । सद्यः (V,3-22)

# द्यस्

सद्यः (V-3-22)

# द्यावा

आदेशः :- समासे द्यावापृथिव्यौ (VI-3-29),

# द्युः

आदेशः :- उभयद्युः (वा) सद्यः (V-3.22).

# द्वयसच्

तद्धितः :- प्रमाणे ऊरुद्वयसम् (V-2-37).

तद्धितः :- पुरुषहस्तिभ्यां वा। पुरुषद्वयसं = पौरुषं । हस्तिद्वयसं, हास्तिनम् । स्त्रियां टिड्ढा (IV-1-15) इति ङीप् (V-2-38).

## ध

इत्

आदेशः :- नह धातोः हकारस्य धः। झलि पदन्ते च । नद्धम्, नद्धव्यम् उपानत् (VII-2-34) नहोध

**आदेशः** :- झष उत्तरयोः तकारधकारयोः स्थाने धः। लभ् + ता = लब्धा लब्धुम्। अलब्ध। दुह + ता। होढः। दोग्धा। दोग्धव्यम्। अध दधाति विना-धत्ता। (VIII-2–40).

## धमुञ्

**तद्धितः** :- द्वित्र्योः धाप्रत्ययस्य द्विधा-द्वैधम्, त्रिधा त्रैधम् इति धमुञ् आदेशः विकल्पेन। पक्षे धा-(V-3-42) विधा = प्रकार इत्यर्थे। अधिकरण-विचाले। अत्र अधिकरणं दव्यं न तु आधारः। तस्य विचालः। संख्यां तारापादनम् (V-3-43) धान्यराशे। विभाग एतयोः द्वयोः अर्थयोः विधा अधिकरण विचालयोः धमुञ् भवति। (V-3–45).

## धा

**तद्धितः** संख्यया विधार्थे धा। द्विधा। पञ्चधा (V-3-42).

**तद्धितः** :- अधिकरण विचालेऽर्थे धा। द्विधा (V-3–43).

**तद्धित** अविप्रकृष्टकाले क्रियाभ्यावृत्तिगणने धा भवति। बहु-शब्दात् वा-दिवसस्य बहुधा भुंक्ते। पक्षे कृत्वसुच्। बहुकृत्वः (V-4-20).

## धि

**तिङ्** लादेशः तिप् तस् झि (III-4-78) तत्र लोटि 'सि' इति मध्यम-पुरुषैकवचनस्य 'हि' इति (III-4 87) अस्य हेः धि इत्यदेशः।

1. हुधातोः = जुहुधि
2. झलिपरतः = भिन्धि। छिन्धि (VI-4-101).
3. शृ श्रृणु प्रभृतिभ्यः छन्दसि शृधीहवम्। श्रृणुधि। पूर्धिः, उरुणस्कृधि (V-4-102).
4. अङितश्च छन्दसि-युयोध्यस्मत् जुहुराणमेनः (VI-4–103).

## धुट्

**आगमः** 1. उकारान्तात् पदात् उत्तरस्य सकारदेः पदस्य धुट् वा मधुलिटत्साये,। मधुलिट्साये। षट्सत्तः। षटसन्तः। (VIII-3-29

2. नकारान्तात् पदात् उत्तरस्य सस्यापि धुट्। भवान्त्साये। भवान्साये। महान्त्साये। महान् साये। सन्त्सः = सन्सः। (VII-3-30).

## धुना

[illegible] अश् आदेशः। धुना इति प्रत्ययः। अधुना (V-3-17).

## ध्येय

तद्धितः :- तादर्थ्ये भागधेयम्। नामधेयम्। रूपधेयम् (वा)पादार्धाभ्यां च (V-4-25).

## ध्यम्, ध्यमुन्

**तद्धितः** :- एकशब्दादेव वा, एकधा कुरु। ऐकध्यं कुरु
धा (V-3-42) इत्यस्य ध्यमुन्नादेशः (V3--44).

## ध्यै

**तद्धितः** :- छ· साढ्यै समन्तात् ध्यै इत्यस्य (VI-3-113).

## ध्वम्

**तिङ्** :- आत्मनेपद मध्यम बहुवचनं तिप्तस् (III-4-78).

### ध्वात्

**तिङ्** :- छ ध्वमो ध्वात्-अन्तरेवोष्माणं वारय ध्वात्। वारयध्वमिति-प्राप्ते VII-1-42

### ध्वे

**तिङ्** :- लादेशः तिप्तस् (III-4-78)इत्यत्रात्मनेपद मध्यमबहुवचनस्य ध्वमित्यस्य टित आत्मनेपदानां टेरे (III-4-79) इति ध्वे इत्यादेशः। एधध्वे (III-4-79)

### न

इत् ञ्नित्यादिः नित्यम् (VI-1-197).

**आदेशः** :- 1. मकारान्तस्य पदस्य नकारदेशः । प्रशान् (VIII-2-64) मो नो धातोः

**आदेशः** 2. मकारवकारयोश्च परतः मकारान्त धातोः नः । अगन्म अगन्व (III-2-65) नकारस्य णत्वप्राप्तिः । रषाभ्यां नो णः समानपदे । आस्तीर्णम् (VIII-4-1),

लोपः (1)नलोपः पूर्वत्रासिध्दः सुप्विधौ, स्वरविधौ संज्ञाविधौ कृति तुग्विधौ नान्यत्र। राजीयति राजाश्व इत्यादिषु (III-2-2)

(2) प्रातिपदिकस्य पदस्य यो नकारः अन्त्यः तस्य लोपः । राजा राजता (VIII-2-7)

(3)ङि सम्बुद्धयोः न लोपः लोहिते । चर्मन् । सम्बुद्धौ हे राजन् (VIII-2-8)

**आदेशः** :- 1.- रेफादुत्तरस्य निष्ठातस्य = आस्तीर्णम् ।

2. दकारदुत्तरस्य निष्ठातस्य = भिन्नम् । (VIII-2-42).

3. संयोगादिः यो धातुः आकारान्तः यण्वान् तस्मात् उत्तरस्य निष्ठातस्य । ग्लानः । प्रद्राणः (VIII-2-43).

4. लूञ्- छेदने इत्यादि वृ वरणे इति यावत् ल्वादयः धातवः तेभ्य उत्तरस्य निष्ठातस्य नत्वम् । लूनः धूनः जीनः इति (VII=2-44)

5. ओकारेत् यो धातुः तस्मात् निष्ठातस्य नः । ओलस्जी = लग्नः ओविजी = उद्विग्नः (IVII-2-45).

6. क्षियो धातोः दीर्घात् निष्ठातकारस्य नः । क्षीणः । निष्ठाया मण्यदर्थे V(I-4-60)वाक्रोशदैन्ययोः (VI-4-61) इति क्षियो दीर्घत्वम् दीर्घाभावे अक्षितमसि (VIII-2-46).

7. श्यायते रुत्तरस्य अस्पर्शे अर्थे निष्ठातो नः । शीनं घृतम् । स्पर्शे शीतो वायुः (VIII-2-47) द्रवमूर्तिस्पर्श (VI-1-24) इति सम्प्रसारणम् । हल (VI-4-2) इति दीर्घः ।

8. अञ्चु धातोः अनपादाने निष्ठातो नः समक्नौ शकुनेः पादौ । पशवो

न्यक्ना: । यस्य विभाषा (VII-2-15) उदितो वा (VII-2-56) इति नेट् । अपादाने तु उदक्तमुदकं कूपात् (VIII-2-48).

9. दिव् धातो: निष्ठातो न: अविजिगीषायाम् । द्यूनः = स्तुत: । द्यून: जिगीषायां (VIII-2-49).

10. निर्वाणेऽवाते । निस्पूर्वक वा धातो: अवातेर्थे । निर्वाण: = दीप: । निर्वाणोऽग्नि: । निर्वाणो भिक्षु: । वाते निर्वात, प्रदेश: (VIII-2-56)

11. नुदविदादिभ्य: वा । नुन्न: नुत्त: । विन्न:वित्त: । घ्रा = घ्राणः घ्रात: । ह्री = ह्रीण:, ह्रीत: (VIII-2-56).

12. ध्या ख्या धातुभ्य: निष्ठातो न: न ।ध्यात: । ख्यात: । पूर्त: । मूर्त: । (VIII-2-57).

13. विदि: लाभार्थक: तस्मात् निष्ठतो न: भोगे प्रत्ययार्थे च न भवति । वित्तमस्य बहु = बहुधनमस्य । वित्तोऽयं मनुष्य: । प्रतीत: । प्रतीयते इति प्रत्यय: । भोगप्रत्ययार्थात् अन्यत्र विन्न: (VIII-2-58).

14. भिदि धातो: क्रियाविवक्षायां शकलविषये भिन्नम् । भित्तं शकल-वाच्ये निपात: । भित्तं तिष्ठति, भित्तं पतति (VIII-2-59).

15. ऋधातो: निष्ठातस्य न: आधमर्ण्ये अधमर्ण: । अन्यत्र ऋतं वक्ष्यामि (VIII-2-60).

16. छन्दसि नत्वाभावो निपात्यते-भाषायां नत्वम् ।

| | | | | |
|---|---|---|---|---|
| 1. नसत्तमञ्जसा- | | नसन्नम् | इति | भाषायाम् |
| 2. निषत्त: | = | निषण्ण: | ” | ” |
| 3. अनुत्तम् | = | अनुन्न: | ” | ” |
| 4. प्रतूर्तम् तूर्वे: | = | प्रतूर्णम् | ” | ” |
| 5. सूर्ता गाव: | = | सृता गाव: | | |
| 6. गूर्तम् | = | गूर्णम् (VIII-2-61). | | |

तिङ् लोप: श्नम् विकरणम् । श्नम: परस्य नस्य लोप: । ञि इन्धी = दीप्तौ

+श्नम् + ते = श्वीदित: (VII-2-14) नेट्। श्न + न् + ध् + ते श्नान्नलोप:। (VI-4-23).

इन् + ध् + ते श्नसोरल्लोप: (IV-4-111)

इन् + ध् + ते झषस्तथोर्धो ध: (VIII-2-40).

इन् + ध् + धे, पूर्वधस्य जस्त्वं = इन्धे। अनिदितां हल उपधाया: (VI-4-24) इत्यनेनापि रूपसिद्धि:। तथाऽपि "अनक्ति" इत्यर्थम्।

तिङ् :- उपधानकारस्य लोप:

1. अनिदितामङ्गानां हलन्तानां उपधाया नलोप: क्ङिति। संसु-स्रस्यते स्रस्त:। सनीस्रस्यते। उपतापार्थक लंगिधातो: शरीरविकारार्थक कम्पिधातो: अनिदित्सु उपसंख्यानम्। विलगित:। विकपित: (वा)VI-4-24)

2. दंश, सञ्ज, स्वञ्जां उपधानकारलोप: शपि परत:। दशति। सजति। परिष्वजते (VI-4-25).

3. रञ्जधातो: शपि = रजति (VI-4-26)

4. रञ्जधातो: भाववाचिनि घञि राग:। भावकरणाभ्यामन्यत्र रङ्ग: (VI-4-27).

कृत् :- नलोप: धञि (1) अवपूर्वस्य उन्दे: = अवोद:

2. इन्धे: गुणश्च = एध: (3)उन्दे: औणादिके मनि परत: = औद्म:।

4. श्रन्धे: प्रपूर्वस्य घञि प्रश्रय:। (5)हिमपूर्वस्य श्रन्थे: = हिमश्रथ:। (VI-4-29).

कृत् :- पूजार्थकस्य अञ्चे: न लोपो न। अञ्चे: पूजायामिनि (VII-2-53) इडागमश्च। अञ्चिता अस्य गुरव:। अञ्चेरन्यार्थे नलोपो भवति। उदक्तमुदकं कूपात्। (VI-4-30)

कृत् :– क्त्वा परत: स्कन्द, स्यन्द धात्वो: नलोपो न। स्कन्त्वा, स्कन्दित्वा। स्यन्त्वा। स्कन्दे: इडागमपक्षे न क्त्वा सेट् (I-2-28) इति कित्व प्रतिषेधादेव नत्वम् (VI-4-31)

नकारस्यानुस्वारादेशः झलि = पयांसि । धनूंषि (VIII-3-24)

नलोपो न जान्तधातूनां नशेश्च क्त्वा परतः । रञ्ज् = रंक्त्वा । रक्त्वा नश् नंष्ट्वा नष्ट्वा (V-4-32)

भञ्ज धातोः चिणि परत एव नलोपो वा । अभाजि पक्षे अभञ्जि (VI-4-33)

पामादिभ्यो मत्वर्थे वा = पामनः पक्षे पामवान् । (V-2-100)

मत्वर्थे ज्योतिस् इत्यत्र उपधालोपे इलोपे ज्योत्स् इत्यस्मात् न प्रत्ययः । टाप् = ज्योत्स्ना । (V-2-114)

**उणादि** :- धा = धाना । पृ = पर्णम् । असि = वस्नः मूल्यं वेतनं । अज् अजेर्वी वेनः । अति = अत्नः आदित्यः (286)अनेके आदेशाः (295) पर्यन्तम्

नप्रत्यये परतः(अनुनासिके) सतुक्कस्य च्छस्य वकारस्य च अनुक्रमेण श, ऊठ् इत्यादेशौ = प्रच्छ् + नङ् यजयाचयत (III-3-9-91) प्रश्नः । अन्तरङ्गत्वात् तुकि कृते सतुक्कस्य शादेशः ।

2) सिवेरौणादिके नप्रत्यये परतः लघूपधगुणात् पूर्वमेव ऊठ् क्रियते सि + उ + न इति स्थिते यण् सन्धिः । स्योनः इति रूपम् । छ्वोः शूडनु (VI-4-19)

## नक्

**उणादि** :- इण् गतौ इनः सूर्यः । सिनः । दीनः । उष्णः (282)

## नङ्

**कृत्** :– भावे = यज् + नङ् = यज्ञः । यत्नः । विश्नः प्रश्नः । कर्तरि । यज्ञः याच्ञा । विश्नः । प्रश्नः । ङित् करणं गुणवृद्धि निषेधार्थम् । प्रश्नः इत्यत्र प्राप्तमपि संम्प्रसारणं न । प्रश्नेचासन्नकाले (III-2-117) इति ज्ञापकात् । यजयाचयतविच्छप्रच्छरक्षोनङ् (III-3-90).

## नजिङ्

**कृत्** :- ताच्छील्ये स्वपेः स्वप्नक् तृषेः तृष्णक् । धृषेः = धृष्णक् (वा) (III-21-72).

## नञ्

**तद्धितः** :- धान्यानां भवने क्षेत्रे (V-2-1) इत्यवधि ये अर्थाः स्त्रीपुंसा (IV-1-87) इत्यारभ्य विहिताः तेषु वाच्येषु स्त्रीशब्दात् नञ् प्रत्ययः विधीयते । स्त्रीषुभवं स्त्रैणम् । स्त्रीभ्यः हितम् = स्त्रैणम् इत्यादयः (IV-1-87)

**तद्धितः** नञ् तत्पुरुषसमासे नकारस्य लोपः । न ब्राह्मणः । अब्राह्मणः अवक्षेपे तिङि अपि-यथा अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म (VI-3-72) अत्र नलोपानन्तरं लुप्तनकारात् नञः नुडागमो भवति अजादावुत्तरपदे । अनजः अनश्वः (VI-3-74)

**तद्धितः** :- नञ् तत्पुरुषसमासे एतेषु नयो लोपो न । नञ् प्रकृत्या भवति नभ्राट् । नपात् (VI-3-75)

भावे कर्तरि स्वप् धातोः = स्वप्नः । अस्मिन्नेवार्थे नङ् विहितः । नन् इत्यत्र स्वरे विशेषः (III-3-91).

## ना,नञ्

सुप् :- पुंनपुंसकयोः घिसंज्ञकात् शब्दात् तृतीयैकवचनस्य टा (आङ्) इत्यस्य ना इत्यादेशः । हरिणा । वारिणा (VII-3-120).

**तद्धितः** :- वि शब्दात्, नञ् शब्दात् यथा संख्यं ना नञ् प्रत्ययौ भवतः पृथक् भावः इत्यर्थे । विना । नाना (V-2-27).

# नाटच्

त· नत नासिक इत्यर्थे अवनाट् (V-2-31).

# नाम्

**तद्धितः** :- सुप् । षष्ठी बहुवचनप्रत्ययः "ह्रस्वनद्यापो नुट्" इति सनुट्कः (VI-4-3).

# नि

तिङ् :- लोडुत्तमैकवचनम् । परस्मैपदि धातोः लट् भवामि । लोट् भवानि आनि लोट् (VIII-4-16) इति उपसर्गस्थात् निमित्तात् णत्वं । प्रभवाणि ।

**उणादि** :- वी = वेणि: । ज्यानि: जूर्णि: (488) कित् सृणि: (489) अग्नि: (490) नित् वह्नि: । तूर्णि: (491) निपाता: घृणि: (492).

# निक्

तिङ् :- छन्दसि विषये:-

1. स्यते: स्यंदे: वा सम्पूर्वकस्य यङ्लुक् । अभ्यासस्य निक् धातुसस्य षत्वञ्च निपात्यते संसनिष्यदत् ।
2. क्रन्दे: लुङि च्लेरङादेश: अभ्यासस्य चुत्वाभाव: निगागमश्च । कनिक्रदत् (VII-4-65).

# निघात

**निघात: स्वरविशेष: समानवाक्ये निघातयुष्मदस्मदादेशा:(वा) आमन्त्रितस्य च (VIII-1-19).**

## निङ्

**तद्धित:** :- जायाया निङ् जानकी जाया यस्य = जानकीजानि: (V-4-134).

# नित्

संज्ञा :- नकार इत् यस्य । स्वरे विशेष: । (VI-1-197).

# नीक्

**आगम:** :- अभ्यासस्य । वञ्चुप्रभृति धातूनां यङि यङ्लुकि च । वञ्चु = वनीवच्यते । वनीवञ्चीति । पद: = पनीपद्यते। पनीपदीति । (VII-4-84).

# नु

**उणादि** :- दा = दानु: भा = भानु: (312)

# नुक्

**आगम:** :- धुञ् प्रीञ् धा वोरङ्गयो: णौ परत: । धूनयति । प्रीणयति ।

(वा) शाच्छासा (VII-3-37).

**स्त्री** :- अन्तर्वत् पतिवत् शब्दाभ्यां स्त्रियां ङीप् तत्सन्नियोगशिष्टः नुक् आगमः । अन्तर्वत्नी = गर्भिणी पतिवत्नी (IV-1-32).।

**आगमः** :- ली ला इत्येतयोरङ्गयोः नुक् लुक् एतौ आगमौ वा घृतं विलीनयति विलीययति (VII-3-39).

**आगमः** :- अनुनासिकान्तस्य अङ्गस्य यो अभ्यासः तस्य अकारान्तस्य नुगागमः यङि यङ्लुकि च । जङ्गम्यते। जङ्गमीति । रंरम्यते रंरमीति। यंयम्यते इत्यत्र झल् परकत्वेऽपि अनुस्वार एव न तु परसवर्णः । वा पदन्तस्य (VIII-4-59) इति विकल्पः। तङ्कथञ्चित् तं कथंचित् इति वत् । अत्राऽपि पदान्तवत् इति (वा) (VII-4-85).

**आगमः** :- जपजभादीनामपि । जञ्जप्यते । जञ्जपीति । जञ्जभ्यते जञ्जभीति (VII-4-86).

**आगमः** :- चरफलोश्च । चञ्चूर्यते । चञ्चुरीति,। पम्फुल्यते । पम्फुलीति

# नुट्

**आगमः** :- तस्मान्नुडचि (VI-3-74) अनश्वः पश्य नञ्

**आगमः** :- ह्रस्वनद्यापो नुट् (VII-1-54) रामाणाम् ।

1) रामाणाम् । नदीनाम्

2) षण्णाम् । चतुर्णाम् (VII-1-55) षट् चतुर्भ्यश्च

3) छ. श्रीशब्दस्य आमो नुट् । श्रीणामुदारः ग्रामणी शब्दस्य आमो नुट्। सूतग्रामणीनाम् (VII-1-56)

4) गो इत्येतस्य ऋक् पादान्ते आमो नुट्। विद्मा हि त्वा सत्पतिं शूरगोनाम्। पादमध्ये गवां गोत्रमुदसृजो मदङ्गिरः (VII-1-57).

तिङ् :- अभ्यासस्य आदेरकारस्य लिटि दीर्घः। अत आदेः (VII-4-70) पपाठ । कृतदीर्घात् अकारात् द्विहलः धातोः नुट् = आनङ्ग। आनञ्ज एकहलस्तु न आट (VII-1-71).

अश्नोतेश्च (VII-4-72) अन्हाय व्यानशे सरः :

आगम :– मतुपः अनन्तादुत्तरस्य छन्दसि = अक्षण्वन्तः (VIII-2-16).

आगमः :– नकारान्तात् उत्तरस्य घुसंज्ञकस्य नुट् छन्दसि। दस्युहन्तरः (VIII-2-17).

आगमः :– "ङमो ह्रस्वादचि ङमुण्णित्यम्" (VIII-3-32) कुर्वन्नास्ते।

# नुम्

तिङ् :- आगमः। "इदितो नुम् धातोः" (VII-1-58) धातूपदेशकाल एव नुमागमः। कुडि = कुण्डिता। कुण्डितुम्।

तिङ् :– मुचादीनां सार्वधातुके एव नुम्। मुञ्चति। मुमोच (VII-1-59).

तिङ् :- मस्जि नशोः झलादौ प्रत्यये एव नुम्। मङ्क्ता मङ्क्तुम्। नंक्ता नंक्तुम्। मज्जनं-नशिता (VII-1-60).

तिङ् :– रधि जभोरचि रन्धकः जम्भकः। रद्धा जभ्यम् (VII-1-61).

तिङ् :- लिङ्भिन्नलकारे इटि परतः रधेः नुम् न। रधिता। रधितुम् लिटि ररन्धिम (VII-1-62).

तिङ् :- रभ धातोः अजादौ प्रत्यये परे नुम् शप् लिट्-विषयकंच वर्जयित्वा। आरम्भी आरम्भकः। शपि तु आरभते। लिट्यपि आरेभे। प्रत्ययस्य अजादित्वाभावात्। आरब्धा (VII-1-63).

तिङ् :- लभेरपि रभेरिव लम्भकः। शप् लिटोस्तु लभते, लेभे। अच्त्वाभावात् लब्धा (VII-1-64).

2. आङुत्तरस्य लभेः = यदि प्रत्यये परतः आलम्भ्यो गौः आङः अन्यत्र = लभ्यः (VII-1-65).

3, प्रशंसायां उपपूर्वात् यादौ–उपलम्भ्या भवता विद्या प्रशंसा भावेउपलभ्यं धनं वृषलात् (VII-1-66).

4. उपसर्गात्परस्य खल्घञोः परतः। ईषत्प्रलम्भः। प्रलम्भः उपसर्गाभावे = ईषल्लाभः लाभः (VII-1-67).

5. अन्योपसर्गरहिताभ्यां सुदुर्भ्यां खल्घञोः परतः न नुम्। सुलभम् । दुर्लभम्। सुलाभः। दुर्लाभः । अन्योपसर्गयुते सुप्रलम्भः, दुष्प्रलम्भः (VII-1-68).

6. चिण्णमुलोः परयोः वा । अलम्भि, अलाभि लंभं, लंभं। लाभम् (VII-1-69).

सुप् :- 1. सर्वनामस्थाने परतः ।

1. उकारेत् शब्दात् धातुवर्जितात् (1) भवतु = भवान्, भवन्तौ, भवन्तः (2) ईयसुन् टिलोपे श्रेयान् श्रेयांसौ श्रेयांसः ।

2. ऋकारेत् शब्दात् धातुवर्जितात् शतृ = पचन् पचन्तौ पचन्तः।

3. अञ्चतेः प्राङ् प्राञ्चौ प्राञ्चः । सर्वनामस्थानभिन्ने तु भवतः पश्य । धातोः (VII-1-70).

2. युजेरसमासे सर्वनामस्थाने-युङ्, युञ्जौ युञ्जः । समासे तु अश्वयुक् । अश्वयुजौ । युजि (युजिर्) निर्देशात् युज समाधौ इत्यस्य नुम् न। युजामापन्नः भक्तः (VII-1-71).

3. 1. नपुंसकस्य झलन्तस्य शिमात्रसर्वनामस्थानत्वात् उदश्विति पयांसि ।

2. नपुंसकस्य अजन्तस्य । वनानि। त्रपूणि ।

3. उगितो झलन्तस्यापि इयसुन्-श्रेयांसि । भूयांसि। कुर्वन्ति कृषन्ति । बहूर्जि प्रतिषेधः (वा) बहूर्जि ब्राह्मणकुलानि (VII-1-72).

4. नपुंसकस्य इगन्तस्याङ्गस्य अजादौ विभक्तौ। त्रपुणी । जतुनी। त्रपुणे। जतुने, (VII-1-73).

5. नुम् निषेधः "तृतीयादिषु भाषितपुंस्कं पुंवत् गालवस्य" (VII-1-74).

सुप् :- अभ्यस्तादङ्गात् उत्तरस्य शतुः न नुम् । ददत् ददतौ ददतः (VII-1-78).

सुप् :- नपुंसके अभ्यस्तात् अङ्गात् शतृप्रत्ययान्तस्य वा नुम् ।

ददति ददन्ति कुलानि (VII-1-79).

सुप् :– अवर्णान्तात् अङ्गात् परः यः शतृप्रत्ययावयवः तदन्तस्याङ्गस्य नुम् वा शीनद्योः परतः। तुदन् + ई = तुदन्ती, तुदती। भान्ती भातीः। तुदन्ति। भान्ति। "जश्शसोः शिः" इति सर्वनामस्थानम् (VII–1–80).

"शप् श्यनोः आत्परो यः शतुरवयवः तदन्तस्य नित्यं नुम् शी नद्योः परयोः। पचन्ती। पचन्ति। दीव्यन्ती। दीव्यन्ति" (VII-1–81).

सुप् :– "अनडुहोरङ्गस्य सौ परे नुम् भवति। अनड्वाह + स् नुम् मित्वादन्त्यादच परः अनड्वान्ह + स् हलङ्याप् (VI-1-68) अनड्वान् संयोगान्त लोपः (VIII-2-23) अनड्वान्। हलोपस्यासिद्धत्वात् "वसुस्रंसुध्वंसु" (VIII-2-72) इति नु इत्यस्य दत्वं न।

1. छ. दृक् + सु ईदृक् नुम्। एवं यादृङ्, तादृङ् सदृङ्।
2. स्ववस् + नुम् + स् = स्ववान्।
3. स्वतवस् + नुम् + स् स्वतवान्पायुरग्ने (VII-1-83).

# नेद

आदेशः :– अन्तिक इत्यस्य-सर्वाणीमानि वस्तूनि अन्तिकानि, एषामिदं अतिशयेनान्तिकम् = नेदिष्ठम्।

उभे इमे अन्तिके तयोरिदं अतिशयेनान्तिकं = नेदीयः (V-3-63).

# न्थ

आदेशः :– पथिमथि शब्दयोः थकारस्य स्थाने न्थ इति भवति सर्वनामस्थाने परतः। पन्थाः। पन्थानौ। पन्थानः। मन्थाः। मन्थानौ। मन्थानः (VII-1-87).

# प

इत् :–

1. स्वरः। 1. अनुदात्तौ सुप् पितौ (III-1-4).
   2. भी ह्री (VI-192) उदात्तः।
2. गुणः सार्वधातुकार्धधातुकयोः (VII-3–84)

1. पिति भवति कर्ता
2. गुणोऽपृक्ते (VII-3-91)ऊर्णोतिः ।अपृक्ते हलि पिति सार्वधातुके गुणः । **प्रौर्णोत्** । प्रौर्णोः ।

3, गुणनिषेधः ।

1. नाभ्यस्तस्य अचि पिति सार्वधातुके (VII-3-87)नेनिजानिः । परिवेविषाणि ।
2. भूसुवोस्तिङि(VII-3-84) अभूत सुवामहै ।

4. वृद्धिः

1. उतो वृद्धिर्लुकि हलि(VII-3-89) यौति । नौति ।
2. ऊर्णोतेर्विभाषा(VII-3-90)प्रोर्णौति । प्रोर्णोति ।

5. पिति हलि सार्वधातुके"इम्"आगमः तृणह इत्यङ्गस्य( VII-3-92)

6. 1. पितः हलादेः सार्वधातुकस्य ब्रू धातोः ईट् । ब्रवीति ।
   2. यङो वा । लालपीति (VII-3-93, 94)

7. पिति कृति ह्रस्वस्य तुक् (VI-1-71).

**आदेशः** :- रुह धातोः णौ परतः वा । रोहयति । रोपयति (VII-3-43)
**उणादि** :- पापम् । नीपम् । वेष्पः जलम् (303).

# पटच्

**तद्धितः** :- विस्तारे पटच् (वा) अविपटम् । सम्प्रोदश्च (V-2-29).

# पद्

**आदेशः** :- पादस्य पद् इत्यादेशः समासे **उत्तरपदे** ।

1. पादाभ्यामजति = पदाजिः । पादाभ्याम् अतति = पदातिः । पादाभ्यां गच्छति = पदगः । पादेनोपहतः पादोपहतः (VI-3-52).
2. पादस्य पत् यत् प्रत्यये अतदर्थे परतः । पादौ विध्यन्ति पद्याः = कण्टकाः । तदर्थे तु पाद्यम् । पद्भावे चरते इकावुपसंख्यानम् (वा) पादः । पर्पादित्वात् ष्ठन् (IV-4-10) पाद + ष्ठन् ।

नकार: स्वरार्थम् । षकार: ङीषर्थ: । ठस्येक: । पाद + इक । पद्भाव: पदिक: (V–3–53).

3. हिमकाषिहतिषु परेषु । पाद + हिम = पद्धिमम् ।
   पाद + काषिन् = पत्कषिणो यान्ति ।
   पाद + हृति = पद्धति: (VI-3-54).

4. ऋक् संबन्धिन: पादशब्दस्य वीप्सायां शे प्रत्यये । पच्छो गायत्रीं शंसति पादश इत्यर्थ: । ऋक्भिन्ने पादश: कार्षापणं ददाति (VI–3-55).

5. विकल्पेन पदादेश: । पद्घोष:–पादघोष: । पन्मिश्र: पादमिश्र: । पच्छब्द: पादशब्द: (वा) पन्निष्क:–पादनिष्क: (VI-3–56).

**आदेश:** :- पाद इति शब्द: यस्यान्ते तस्याङ्गस्य भस्य पदादेश: । द्विपद: = पस्य द्विपदिकां ददाति । भस्येति किम् ? द्विपादौ (VI-4-130).

# पाशप्

याप्ये = निन्दायाम् । वैयाकरणपाश: (V-3–47).

# पास

**उणादि** :– कृञ्–कर्पास: (723).

## पिञ्ज

तिलात् निष्फलात् पिञ्जपेजौ (वा) "पितृव्य" (IV–2-36) तिलपिञ्ज: ।

# पिटच्

नासिकाया नते अभिधेये पिटच् निशब्दात् । निशब्दस्य चि इत्यादेश: । चिपिट: (V-2–33).

# पु

**प्रत्याहार:** :– पवर्ग: । अणुदित्सवर्णस्य (I-I-73).

# पुक्

**आगम:** – णौ परत: पुगागम: । "पुगन्त" (VII-3-86) गुण: । ऋ =

अर्ति–अर्पयति । ह्री = ह्रेपयति । व्ली–व्लेपयति । री–रेपयति । क्नूयी–क्नोपयति । क्ष्मायी क्ष्मापयति ।

# पुम्

आदन्तात् पुम् । धापयति । दापयति (VII-3-36) अम् परे खयि परतः पुमः रुः । पुंस्कामा (VIII-3-6).

**आदेशः** – पतः पुम् (VII-4-19) पततेरङ्गस्य अङि पुम् । अपप्तत् ।

## पुंस्

पुंस् इत्यस्य सर्वनामस्थाने परतः असुङ् । पुमान्–पुमांसौ-पुमांसः (VII-1-89).

# पेज

तिलात् निष्फलात् पेज (त्रा) पितृव्य (IV–2–36) तिलपेजा निष्फलतिला।

# फ

**इत्** :– आयनेयी (VII-1–2) फकारादीनां तद्धितप्रत्ययानां "फ" इत्यस्य आयन् आदेशः । नडादिभ्य. फक् (IV-1-99) नाडायनः ।

# फक्

गोत्रापत्यम् इत्यर्थे पौत्रप्रभृतिषु वाच्येषु । नडादिभ्यः नाडायनः (IV-1-99) नडस्य पौत्रः । पौत्रस्य पुत्रादयश्च ।

**तद्धितः** :– हरितादिभ्योऽञः (IV–1-100) यञिञोश्च (IV-1–101) शरद्वत् शुनकदर्भात् भृगुवत्साग्रायणेषु (IV-1-102) अन्यतरस्याम् (IV-1–103).

**चातुर्थिकः** :– पाक्षायणः । तौषायणः (IV-2-80).

**उणादि** :– 'उत्' आगमश्च । कुल्पः शरीरावयवः । गुल्फः पादग्रन्थिः (704).

## फञ्

**तद्धित** :- गोत्रापत्ये अश्वादिभ्यः । आश्वायनः (IV–1-110) गोत्रा-

पत्ये भर्गात् त्रैवर्गे त्रिगर्तदेशोत्पन्नः भार्गायणः (IV-1-111).

# फि

साधारणो निर्देशः फिन् फिञो फेश्च च (IV-1-149) कुत्सायाम् ।

## फिञ्

तद्धितः :– फांटाहृतस्य सौवीरगोत्रापत्यम् । फांटायनिः । मैमतायनिः सौवीरगोत्रापत्यादन्यत्र फांटाहृतायनः (IV-1-150).

**तद्धितः**

1. अपत्यार्थे तिकादिभ्यः । तिकस्यापत्यं तैकायनिः (IV-1-154)
2. कौसल्यस्य अपत्यं कौसल्यायनिः । कर्मार्यायणिः (IV-1-155).
3. अण्णन्ताद्द्व्यचः शब्दात् अपत्यार्थे । कार्त्रायणिः । हार्त्रायणि (IV-1-156).
4. वृद्धादगोत्रात्। आम्रगुप्तस्यापत्यम् आम्रगुप्तायनिः (IV-1-157)
5. वाकिनादीनां कुक् च । वाकिकस्यापत्यं पुमान् वकिनकायनिः। (IV-1-158).
6. पुत्रान्तात् फिञ् कुक् वा । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः (IV-1-159).

# फिन्

तद्धितः :– अवृद्धात् प्राचाम् फिन् वा । ग्लुचुकस्यापत्यं पुमान् ग्लौचुकायिनः । पक्षे इञ् । ग्लौचुकिः (IV-1-160).

# ब

तद्धितः मत्वर्थे । कम्बः । शम्बः (V-2-138)

## बहुच्

तद्धितः :– विभाषा सुपो बहुच् पुरस्तात् । बहुपटुः । "परश्च" (III-1-2) इत्यस्यापवादः (V-3-68).

## बिडच्

**तद्धितः** :- नते नासिकाया निशब्दात् बिडच् । निबिडम् (V-2-32).

## बिरीसच्

नते नासिकाया निशब्दात् निबिरीसम् (V-2-32).

# भ

**संज्ञा** :- भम् (I-4-18,19).

**उणादि** :- दृदलिभ्याम् । दर्भः । दलभः । ऋषिः चक्रः (431).

**तद्धितः** :- मत्वर्थे कम् अस्यास्तीति कम्भः । शम्भः (V-2-138)तुन्दि रस्यास्तीति तुन्दिभः । वलिभः । वटिभः (V-2-139).

## भक्तल्

**तद्धितः** :- विषयो देशे(IV-2-52) इत्यर्थे ऐषुकारिः आदिः येषां ते ऐषुकार्यादयः । ऐषुकारीणां विषयो देशः ऐषुकारिभक्तः (IV-2-54).

## भन्

**उणादि** :- अर्भः । गर्भः । इभः (432, 433).

## भिस्, भ्यस्, भ्याम्

**सुप्** :- स्वौजसमौट् (IV-1-2).

## भ्रटच्

**तद्धितः** :- नते नासिकाया (V-2.31) अवभ्रटम् तद्वान् पुरुषः अवभ्रटः

## भष्

**आदेशः** :- एकाचो बशो भष् झषन्तस्य स्ध्वोः (VIII.2-37, 38).

# म

**इत्** :- 1. मिदचोऽन्त्यात्परः (I-1-47) परश्च (III-1-2) इत्यस्यापवादः मित् प्रत्ययः शब्दात् परो न । किन्तु शब्दे अन्त्यो यः अच्

तस्मात्परः । भिनत्ति ।

2. "मितां ह्रस्वः" (VI-4-92) उपधाह्रस्वः णौ । घटदायो मितः। घटयति। यम् = परिवेषणे । परिवेषयति = यमयति चन्द्रम् ।

**आदेशः** :- 1. अदसोऽसेर्दादु दो मः(VIII-2-80) अमुम् ।

2. इदमो मः (VII-2-108) इयम् । अयम् ।

3. दश्च (VII-2-109) इमौ । इमे ।

4. इदमो मकारस्य यकारादेशः (VII-1-110) इयम् ।

तिङ् :- परस्मैपदानां (III-4-82) मस्स्थाने लिटि म बभूविम ।

सुप् :- त्वमावेकवचने (VII-2-97) माम् । मया । मत् । मम । मयि ।

कृत् :- क्षायो मः (VIII-2-53) क्षै धातोः निष्ठातस्य मः । क्षामः । स्त्यायतेः वा (VIII-2-54) प्रस्तीमः

तद्धित :– मत्वर्थे । द्युमः सूर्यः । द्रुमः वृक्षः (V-2-108).

तद्धितः शैषिकः :- मध्यान्मः (IV-3-8) मध्यमः ।

# मक्

**उणादिः** :- इष्मः(I42 to 147).

# मट्

**तद्धितः** :- आगमः । संख्यावाचिनः षष्ठीसमर्थात् नान्तात् शब्दात् पूरणार्थे यः डट् विहितः(V-2-48) तस्य मट् भवति । असंख्यादेः-पञ्चमः । सप्तमः(V-2-49).

# मण्

अन्तः पूर्वपदाट्ठञ् (IV-3-50) इति सूत्रे मण् मीयौ च प्रत्ययौ वक्तव्यौ (वा) अव्ययीभावात् तत्र भवः इत्यर्थे-मध्य + मण् माध्यमम् ।

# मतुप्

**तद्धित** :- चातुरर्थिकः । नद्यां मतुप् (IV-2-84).

1. उदुम्बरावती तदस्मिन् देशे तन्नाम्नि इति उदुम्बरो यस्या स्तीरे इति । मादुपधाया इति (VIII-2-9) मतो वत्वम् । उगितश्चेति (IV-1-6) इति ङीप् । उपधादीर्घः । अत्वसन्तस्य चाधातोः (VI-4-14).

2. मध्वादिभ्यश्च (IV-2-86) मधु अस्मिन् देशे इति मधुमान् देशः ।

**तद्धितः** :– 1. तदस्यास्त्यस्मिन् (V-2-94) षष्ठी । गावो अस्य सन्ति गोमान् । सप्तमी वृक्षा अस्मिन् सन्तीति वृक्षवान् पर्वतः । भूमनिन्दा

2. रसादिभ्यः (V-2-95) रसोऽस्मिन्नस्ति इति रसवान् । जिहीर्षावान् । पक्षे लच् (V-2-96, 97).

**तद्धितः** :- वर्चस् शब्दः यस्मिन् मन्त्रे वर्तते सः वर्चस्वान् मन्त्रः । चयने मन्त्रेण इष्टका उपधीयंते । वर्चस्वान् उपधानो मन्त्रः यासाम् इष्टकानां ताः वर्चस्याः । तद्वानासामिति यत् मतुबः लुक् च । वर्चस् + मतुप्, लुक् + यत् = वर्चस्याः इष्टकाः । तद्वानासामुप (IV-4-125) एवं तेजस्या वयस्या रेतस्या इष्टकाः । यस्मिन् मन्त्रे वयः शब्दः मूर्धन् शब्दश्च विद्यते तद्वानस्यामिति विषये वयस् + मतुप् + यत् मतुब्लोपे वयस्या इष्टका इति भवति । एवं मूर्धन् + मतुप् मूर्धन्वत् शब्दादपि **यत्** स न भवति । मूधन्वत्शब्दात् मतुप् । मूर्धन्वतीरुपदधाति इति । वयः शब्दः मूर्धन् भवति । शब्दश्च यस्मिन् सः मन्त्रः मूर्धावयः प्रजापतिछन्दः इति ।

**लुक्** :- गुणवचनेभ्यो मतुबो लुक् (वा) तदस्या (V-2-94) शुक्लो गुणो अस्य पटस्य शुक्लः पटः । एवं कृष्णः ।

**तद्धितः** :– बलादिभ्यः मतुबन्यतरस्याम् (V-2-136)बलवान् । बली

**आदेशः** :– मतुपो मकारस्य वकारादेशः ।

1. मकारान्तात् । किम्–किंवान् ।
2. मकारोपधात् शमीवान् । दाडिमीवान् ।
3. अकारान्तात् । धनवान् ।
4. अकारोपधात् । पयस्विनी । यवादिगणवर्जितात् यवमान् (VIII-2-9)झयन्तादपि-मरुत्वान् (VIII-2-10)

# मदिक्

**उणादि** :- युषि-असिभ्याम् । युष्मत् । अस्मत् । त्वम् । अहम् । (136)

# मन्

**उणादि** :- अर्तिस्तु सु प्रभृतिभ्यः । अर्मः चक्षूरोगः । स्तोमः (137) जहातेः सन्वादालोपः जिह्मः(138) अवेष्टिलोपश्च अवतीति ओम्(139) ग्रसेरा च (140) ग्रामः । किञ्च अवेः ज्वर त्वरेति ऊठि सवर्णदीर्घे ऊमम् = नगरम्(141)

# मनिः

**उणादि** :- मिथुने मनिः । उपसर्गक्रियासम्बन्धोऽत्र मिथुनम् । न तु स्त्रीपुंसौ । सोपसर्गात् धातोः मनिः । स्वरे विशेषः सुशर्मा । मनिरयं मनिन् प्रत्ययात् भिन्नः (591).

# मनिण्

अत = सातत्यगमने । णित्वादुपधावृद्धिः । आत्मा (592).

# मनिन्

1. स्यतीति साम (592).
2. नामन् सीमन् इत्यादयः मनिनन्ता निपाताः । नित्स्वरः (590).

**कृत्** :- छन्दसि अकारान्तधातुभ्यः सुबन्ते उपपदे ।

1. सुदामा । सुधामा (III-2-74).
2. अकारान्तधातोरन्यत्रापि । सुशर्मा (III-2-75).

# मम्

**तद्धित** :- क्त्रेर्मम् नित्यम् (IV-4-20). ड्वितः क्त्रिः (III-3-88) इति क्त्रिप्रत्ययान्तात् मम् नित्यम् । पाकेन निर्वृत्तम् पक्त्रिमम् । वापेन उप्त्रिमम् ।

# मम

**सुबन्तम् :–** तव ममौ ङसि (VII-2–96). मम । परममम । अतिमम ।

# मय्

**प्रत्याहार:** :– मय उञो वो वा (VIII–3-33).

# मयट्

**तद्धित** :– तत्र आगत इत्यर्थे (IV-3-74) हेतुवाचिभ्य: । समयम् । मनुष्यवाचिभ्य: देवदत्तमयम् (IV-3-82).

**तद्धित** :-1. विकारे अवयवे चार्थे अन्ये प्रत्यया अञादय: विहिता: तत्र "मयट्" प्रत्ययोऽपि भक्ष्यार्थमाच्छादनार्थञ्च वर्जयित्वा। कपोतमयम्। लोहमयम् । पक्षे कापोतम् (IV–3-143).

2. वृद्धसंज्ञकेभ्य: तयोरेवार्थयो: नित्यं मयट् । आम्रमयम् । शाकमयम् । विकल्पो नेति नित्यम् ।
3. शरादिभ्य: । शरमयम् । दर्भमयम् (IV-3–144).
4. पुरीषे वाच्ये गो शब्दात् । गोमयम् (IV-3-145).
5. पिष्टाच्च । पिष्टमयम् भस्म । अभक्ष्यार्थत्वात् (IV–3–146).
6. व्रीहिमय: पुरोडाशार्थे (IV-3-148).
7. भक्ष्यार्थे विकारे अवयवे च । तिलमयम्। यवमयम् (IV-3-149)
8. द्व्यच: छन्दसि विकारे अवयवे । पर्णमयी जुहू भवति । शरमयं बर्हि: (IV–3-150).
9. मयट् निषेध: छन्दसि उकारवत् शब्दात् वद्ध्रेत् बिल्वात् च विकारावयवयो: मयट् न भवति । गर्मुत् शब्दात् अञ् । गार्मुतम्। अनुदात्तादेश्च (IV-3–140) वौत्वम् अण् । बिल्वादिभ्य: अण् (IV-3–136,IV-3-151).

**तद्धित:** :– संख्यावाचिन: प्रातिपदिकात् गुणस्य भागस्य निमानं = मूल्यम् इत्यर्थे द्विमयमुदश्वित् द्वौ भागौ यवस्य एकभागस्य उदश्वित:

मूल्यम् (V-2-47).

**तद्धितः** :- प्रकृतिवचने = प्राचुर्यार्थे = अन्नमयं भोजनम् । अत्र प्राचुर्यम् । आनन्दमयोऽभ्यासात् वेदान्तसूत्रम् (I-1-5) (V-4-21).

**तद्धितः** :- बहुषु प्रभूतार्थे गम्यमाने "तस्य समूहः" (IV-2-36) इत्यत्र यथा प्रत्यया भवन्ति तथा मयट् अपि । अपूपमयं पर्व (V-4-22)

# मरीसच्

**तद्धितः** :- अविमरीसम् = अविदुग्धम् । (वा) "पितृव्य मातुल" (IV-2-36)

# मश्

**तिङ्** :- "मिप्" उत्तमैकवचनस्य (III-4-78) मश आदेशः छ. वधीं वृत्रम् । क्रमीं वृक्षस्य शाखाम् (VII-1-40).

# मस्

**तिङ्** : परस्मैपदि उत्तमपुरुषबहुवचनम् । भवामः (III-4-78).

# मसिः

**तिङ्** :- छ. मस् इत्यस्य इकारान्तत्वं निपात्यते । पुनस्त्वां दीपयामसि । त्वयि रात्रिं वासयामसि (VII-1-46).

## महिङ्

**तिङ्** :- आत्मनेपदि उत्तमबहुवचनम् (III-4-78).

# महे

**तिङ्** :- आत्मनेपदि लट् उत्तमबहुवचनम् । टित आत्मनेपदानां टेरे (III-4-79).

## मह्य

**सुप्** :- तुभ्य मह्यौ ङयि । मह्यम् (VII-2-95).

# मात्रच्

**तद्धित** :- प्रमाणे षष्ठयर्थे मात्रच् ऊरुमात्रं जलम् (V-2-37)

**तद्धितः** :- प्रमाणे मात्रच् पुरुषमात्रम् । हस्तिमात्रम् (V.2-38).

# मान

**कृत्** :- अकारान्तादङ्गात् आने परे मुक् । पचमानः (VII-2-82)

# मि

**उणादि** :- नियो मिः । नेमिः (483).
अर्तेश्च । ऊर्मिः (484).
भुवः किम् । भूमिः (485).
अश्नोते रः । रश्मिः (486) दालिमः (487).

# मिन्

**तद्धितः** :- मत्वर्थे गो शब्दात् गोमिन् (V-2-114)

## मिनिः

**उणादि** :- जुहोतेः होमी (364).

## मिप्

**तिङ्** :- उत्तमैकवचनं परस्मैपदि (III-4-78).

## मीय

**तद्धितः** :- मणमीयौ (वा) मध्यमीयम् । अन्तपूर्वं (V-3-60).

## मु

**आदेशः** :- अदसोऽसेः (VIII-2-80) अमुम् ।

## मुक्

**उणादि** :- उष-दाहे । षस्य लत्वम् । उल्मुकः = ज्वलदङ्गारः (346).

**कृत्** :- आने मुक् अदन्तात् । पचमानः (VII.2-87).

## मुम्

**आगमः** :- अरुर्द्विषदजन्तस्य मुम् किति परतः । अरुस्+तुद तुदः खशे तः (III-2-35) अरु+मुम्+स्+तुदः संयोगान्तस्येति सलोपः ।

अरुन्तुदः । द्विषन्तपः । कालिमन्या । अत्र खित्यनव्ययस्य (VI-3-66) इनि ह्रस्वः (VI-3-67).

**आगमः** :– कारे सत्यागदस्य । सत्यङ्कारः । अगदङ्कारः ।

1. अस्तु अस्तुङ्कारः (वा) (VI-3-70).
2. भक्षङ्कारः छ. लोके भक्षकारः (वा)
3. धेनोः भव्यायाम् । धेनुम्भव्या (वा) ।
4. लोकस्य पृणे । लोकम्पृणा (वा) ।
5. इन्धेऽनभ्यासस्य । अग्निमिंधः (वा) ।
6. गिले अगिलस्य । तिमिङ्गिलः । गिलस्य तु गिलगिलः (वा) ।
7. तिमिङ्गिले वक्तव्यः । तिमिङ्गिलगिलः (वा) ।
8. उष्णभद्रयोः मुम् करणे । उष्णङ्करणम् । भद्रङ्करणम् (वा) (VI-3-70).

**तद्धितसमासः** :– श्यैनम्पाता । ञप्रत्यये मुमागमः । तैलम्पाता । ञः (IV-2-58; VI-3-71).

**तद्धित समासः** :– रात्रिशब्दात् कृदन्ते उत्तरपदे विभाषा मुम् । रत्रिञ्चरः । रात्रिचरः । रात्रिशब्दात् खिदन्ते कृति उत्तरपदे तु नित्यम् । रात्रिम्मन्यः (VI-3-72).

## य

**प्रत्ययः** :– यकारादिः प्रत्ययः तद्धितश्चेत् तस्मिन् परे भस्य इकार अकारान्तस्य लोपः । "यस्येति च" (VI-4-148).

उच्चारणे विशेषः । व्योर्लघुप्रयत्नतरः । भोय् + अच्युत (VIII-3-18).

**तद्धितः** :– तस्य समूहः (IV-2-37) इत्यर्थे पाशादिभ्यः । पाशानां समूहः पाश्या । तृण्या । ठकोपवादः (IV-2-49) खल्या । गव्या । रथ्या रथानां समूहः (IV-2-50).

**तद्धितः** :– तस्य समूहः चातुरर्थिकः बलादिभ्यः । बल्यः । कुल्यम् (IV-2-80).

**शैषिक** :– तत्र जात इत्यर्थे ग्राम्य: (IV-2-94) तत्र साधु: (IV-4-98) इत्यर्थे सभायां = सभ्य: (IV-4-105) सोदरात्-सोदर्य: । विभाषोदरे (VI-3-88) इति समादनस्य सभाव: (IV-4-109).

शयित: इत्यर्थे छन्दसि पूर्वै: कृतमित्यर्थे पूर्वै: कृत: पन्था: तै: पथिभि: पूर्व्यै: । अत्र इन् ख च पूर्विणै: पूर्वीणै: (IV-4-133).

**तद्धित** :– अर्हतीत्यर्थे सोममर्हति सौम्य: ब्राह्मण: (IV-4-137) विकारार्थे सौम्य: । अवयवार्थे सोम्य: (IV-4-138)

प्रक्रिया । हल उत्तरस्य यस्य आर्धधातुके लोप: भिन्दिता (VI-4-49).

**सुप्** :– आदेश: । योऽचि । त्वया । मया । त्वयि (VII-2-89).

**तद्धित:** :– भावे (V-1-119) सख्यु: भाव: कर्म वा सख्यम् (V-1-126) दूतवणिग्भ्याम् (त्रा) दौत्यम् ।

**सुप्** :– आदेश: । ङेर्य: । रामाय (VII-1-13).

**आदेश:** :– इदमो मस्य यादेश: सौ । इयम् । य: सौ (VII-2-110).

**उणादि** :– माया । छाया । सस्यम् । सख्यम् (549).

**आदेश:** :– तयो यवौ अचि संहितायाम् । अग्ना ३ यिन्द्रम् (VIII-2-108).

# यक्

**उणादि** :- जनेर्यक् जाया भार्या । जन्यं युद्धम् । ये विभाषा (VI-4-43). ये परे आत्वं वा (550) अघ्न्या = अर्जुनी । अघ्न्य: प्रजापति: । कनी दीप्तौ कन्या । वन्धि वन्ध्या (551).

**तिङ्** :- कण्ड्वादिभ्य: । कण्डूयति । मन्तूयति (III-1-27) अकृत् सार्वधातुकयोर्दीर्घ: (VII-4-25) इति दीर्घ: ।

**आगम:** :- कृत् । क्त्वो यक् छ· कृत्वाय सविता धिय: कृत्वा इति वक्तव्य: (VII-1-47).

**तिङ्** :- सार्वधातुके भावे कर्मणि । भूयते । क्रियते (III-1-67).

**तद्धित:** :- अभिजन (IV-3-90) इत्यर्थे कूचवार शब्दात् यक् । कौचवार्य: (IV-3-94).

**तद्धितः** :- पत्यन्तशब्दात् सेनापत्यम् । भावः कर्म वा । **प्राजापत्यम्** । पौरोहित्यम् । भावः कर्म वा राज्यम् (V-1-128).

## यङ्

**तद्धितः** :- धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । यायज्यते । पापच्यते(III-1-22) सूचि सूत्रि (वा) सोसूच्यते । सोसूत्र्यते ।

**तिङ्** :- नित्यं कौटिल्ये गतौ । चङ्क्रम्यते (III-1-23).

**तिङ्** :- भावगर्हायां गर्हितं लुम्पति-लोलुप्यते (III-1-24)

**प्रत्याहारः** :- "धातो रेकाचो हलदेः"(III-1-22) इत्यत्र यङ् प्रत्ययः विहितः । यङ्ः य शब्दादारभ्य लिङाशिष्यङ् (III-1-86) इत्यत्र अङ् इति ङकारान्तं "यङ्" इति एकः प्रत्याहारः । एतस्मिन् ग्रन्थे ये ये प्रत्यया विहितः ते सर्वे यङ् इत्यनेन गृह्यन्ते । एतेषु प्रत्ययेषु ये विधयः ते सर्वे छन्दसि विकल्प्यन्ते । विकरणानां बहुलं व्यत्ययः । व्यत्ययो बहुलम् (III-1-85) "इन्द्रेण युजा तरुषेम वृत्रम्" तरेम इति प्राप्ते (III-1-86 क्रियासमभिहारः = क्रियायाः पौनः पुन्यम् ।

## यञ्

**प्रत्याहारः** :-

1. यञादौ सार्वधातुके अतोऽङ्गस्य दीर्घः । भव + मि = भवामि । भवावः । भवामः(VII-3-101)
2. यञादौ सुपि अतो दीर्घः । रादाय(VII-3-101).

**तद्धितः** :- गोत्रापत्ये गर्गादिभ्यः । गर्गस्य गोत्रपत्यं

1. पौत्रः पौत्रपुत्रः गार्ग्यः । वात्स्यः(IV-1-105).
2. मधुरशब्दात् ब्राह्मणे माधव्यः ब्राह्मणः । ब्राह्मणादन्यो माधवः इति भवति । अत्र मधु + यञ् इति स्थिते ओर्गुणः इति (VI-4-146) उकारस्य गुणः । मधो + यञ्, वान्तो यि प्रत्यये (VI-1-79) इति वकारदेशः । मधव् + यञ् तद्धितेष्वचामादेः (VII-2-117) इति वृद्धिः । माधव्यः । एवं बाभ्रव्यः । अन्यः माधवः । बाभ्रवः । (IV-1-106)

3. अङ्गिरसे गोत्रे वाच्ये कपि इत्यस्य गोत्रापत्यं = काप्यः । एवं बोध इत्यस्य बौध्यः गोत्रापत्यम् (IV-1-107)
4. वतण्डस्य गोत्रापत्यं पुमान् वातण्ड्यः (IV-1-108).

**तद्धितः** :- स्त्रियां यञ् लोपः वतण्डस्य गोत्रापत्यं स्त्री वतण्डी (IV-1-109).

**तद्धितः** :- समूहार्थे केदाराणां समूहः कैदार्यम् (IV-2-40) पक्षे (1)वुञ् कैदारकम् । गणिकानाञ्च समूहो गाणिक्यम् (वा) (2)समूहे केशशब्दात् समूहे कैश्यम् पक्षे ढक् (IV-2-48)

**तद्धितः** :- समुद्रसमीपे वर्तमानात् द्वीपप्रातिपदिकात् द्वीप + यञ् = द्वैप्यम् = मधु । द्वैप्या कन्या (IV-3-10)

**तद्धितः** :- तस्य विकार इत्यर्थे (IV-3-168) कंसशब्दात् छः (V-1-1) कंसीय इति रूपम् । तस्मात् विकारार्थे यञ् । तत्सन्नियोगेन कंसीयस्य लुक् कांस्य इति रूपम् (IV-3-168).

**तद्धितः** :- अभिजिदादि शब्देभ्यः अणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् । अभिजित् + अण् अपत्यार्थे आभिजितः । तदन्तात् यञ् आभिजित्यः, आभिजित्यौ । अभिजिताः (V-3-118).

# यण्

**प्रत्याहारः** :- इको यण् अचि (VI-1-77)

**आदेशः** :- इण् धातोरङ्गस्य यण् इत्यादेशः अचि । यन्ति । यन्तु । आयन् (VI-4-81)

# यत्

**आदेशः** :- सन्धिः । इको यण् अचि (VI-4-82, 87)

**उणादि** :- दधातेः यत् नुट् च । धान्यम् (726)

**कृत्यप्रत्ययः** :- अचो यत् (III-1-97) चेयम् । जेयम् ।

1. **यत्** इत्यत्र तकारेत्वं स्वरे विशेषः । यतो नावः (VI-1-213) यदयं "ऋहलोर्ण्यत् (III-1-124) इत्यस्यापवादः ।

2. अकारोपधात् पवर्गान्तधातोः शप्–शप्यम् । लभ–लभ्यम् (III-1-98).

3. शक्लु = शक्तौ–शक्यम् । सह = मर्षणे–सह्यम् (III-1-99)

4. गद–व्यक्तायां वाचि = गद्यम् । मदी–हर्षे = मद्यम् । चर– गति-भक्षणयोः = चर्यम् । यम-उपरमे = यम्यम् । अनुपसर्गे एव । उपसर्गे तु प्रगाद्यम् । प्रमाद्यम् । चरे राडि चागुरौ (वा) आचर्यो देशः । गुरौ आचार्यः उपनेता (III-1-100)

निपाताः :- यत्प्रत्ययान्ताः ।

1. अवद्यम्-गर्ह्यार्थे । अवद्यं पापम्–वदधातोः ।

2- पण्यम्-पणितव्यार्थे । पण्या गौः । पण्यं कम्बलः ।

3. वर्या- अनिरोधार्थे । वर्या शतेन–वृञ् धातोः । एतेषां धातूनाम् अन्यार्थे यत् न (III-1-101)

कृत्यप्रत्ययः :– करणे अर्थे वह धातोः वहत्यनेनेति वह्यम्-शकटम् । करणाभावे वाह्यम् (III-1–102)

कृत्यः :- ऋहलोर्ण्यत्(III-1-124) इति ऋधातोः ण्यति प्राप्ते स्वामीवैश्य इत्येतयोः अर्थयोः यत् । अर्यः स्वामी । वैश्यश्च (III-1–103)

कृत्यः :- उपपूर्वात् सृधातोः गत्यर्थात् प्रजने गर्भग्रहणे काल्या योग्या चेत् यत् । उपसर्या बडबा । गर्भग्रहणाय उपयुक्तकालवती । उपसर्या काल्या गौः (III-1–104).

कृत्यः :- कर्तरि जृष् वयोहानौ इति धातोः नञ् पूर्वात् सङ्गतिः इत्यर्थे यत् । अजर्यम् सङ्गतम् । सङ्गतार्थाभावे अजरिता कम्बलः (III-1–105).

कृत् :- वदधातोः सुपि उपपदे यत् क्यप् च । ब्रह्मोद्यम् । क्यप् ब्रह्मवद्यम् (III-1-106).

कृत् :- 1. अपत्यार्थे राजन् श्वशुर इति शब्दयोः । राजन्यः = राज्ञः अपत्यम् । श्वशुरस्य अपत्यं श्वशुर्यः (IV-1-137).

2. असमस्तपदात् कुलशब्दात् कुल्यः । अत्र ढकञ् अपि ।

कौलेयकः । खः अपि । कुलीनः (IV-1-140).

**जातौ** :- मनुशब्दात् षुक् आगमश्च । मानुषः । पक्षे मानवः (IV-1-161).

**संस्कृतं भक्षाः** इत्यर्थे शूलेन संस्कृतं मांसं शूल्यम् (IV-2-16) उखा पात्रविशेषः । उखायां संस्कृतम् अन्नं उख्यम् (IV-2-17).

**तद्धितः** :- वायुर्देवता अस्य इत्यर्थे वायव्यम् ।

1. श्वेतमालभेत भूतिकामः । ऋतव्यं । पित्र्यम् । उषस्यम् (IV-2-31).
2. द्यावापृथिव्यौ देवते अस्य द्यावापृथिव्यम् । शुनासीर्यम् । मरुत्वत्यम् पक्षे छः । द्यावापृथिवीयम् (IV-2-32).

**तद्धितः** :- शैषिकः । दिव्-दिव्यम् । प्राच्यम् (IV-2-101)अर्धशब्दात् अर्ध्यम्(IV-3-4)परार्ध्यम् । अवरार्ध्यम् । उत्तरार्ध्यम् (IV-3-5)पूर्वार्ध्यम् । दक्षिणार्ध्यम् (IV-3-6).

**तद्धितः** :- भावार्थे दिशि भवं दिश्यम् । शरीरावयवात्-दन्त्यम् (IV-3-54, 55).

**तद्धितः** :- आगतः इत्यर्थे पित्र्यम् ठञ् च पैतृकम्(IV-3-79).

**तद्धितः** :- एका दिक् इत्यर्थे उरस्यः पक्षे उरस्तः (IV-3-114)

**तद्धितः** :- छन्दश्शब्दात् भव इत्यर्थे व्याख्याने छन्दस्यः पक्षे अण् च। छान्दसः (IV-3-71).

**तद्धितः** :- तस्येदमित्यर्थे रथ्यम् = रथनाभिः (IV-3-121).

**तद्धितः** :- अवयवे विकारे च । गव्यम् = पयस्यम् (IV-3-190).

**तद्धितः** :- द्रुशब्दात् द्रव्यम् = द्रोः विकारः पदार्थवाची द्रव्यंमन्यः (IV-3-161).

**तद्धितः** :- तद्वहति इत्यर्थे रथं वहति रथ्यः = अश्वः । युग्यः । प्रासङ्ग्यः (IV-4-75).

**तद्धित** :- धुरं वहति धुर्यः । ढक् च धौरेयः (IV-4-77).

**तद्धितः** :- संज्ञायां जन् इत्यस्मात् । जन्या जामातृवयस्या । सा जनीं

नवोढां जामातृसमीपं प्रापयति (IV-4-82).

तद्धितः :- विध्यति इत्यर्थे पादौ विद्धचन्ति पद्याः शर्कराः। ऊरू विध्यति ऊर्व्या कण्टकाः । ऊरू + यत् ओर्गुणः (VI-4-146) ऊर्व् + यत् वान्तो यि प्रत्यये (VI-1-79).

धनुष्करणकवधे चोरं विध्यति शूरः (IV-4-83)पदमस्मिन् दृष्टमित्यर्थे पद्याः शर्कराः। पद्यः कर्दमः (IV-4-87).

आबर्हः = उत्पाटनं यस्य तत् आबर्हि यस्य मूलं आबर्हि मूलोत्पाटनेन विना न लभ्यते धान्यम् । मूल्या माषाः । मूल्या यवाः (IV-4-88).

संज्ञायाम् :- धेनुष्या उत्तमर्णाय दत्ता या धेनुः। षुक् आगमः (IV-4-89).

तद्धितः :- तृतीयासमर्थादेव प्रातिपदिकात् यत्।

1. नावा तार्यं नाव्यम् = उदकम् । नदी = नाव्या ।
2. वयसा तुल्यः वयस्यः = सखा ।
3. धर्मेण प्राप्यं-धर्म्यम् । धर्मादनपेतं धर्ममन्यत् ।
4. विषेण वध्यः = विष्यः ।
5. मूलेन आनाम्यं = मूल्यम् । पटादीनाम् उत्पत्तिकारणं मूलं तेन तत् अभिभूयते आनाम्यं आपूर्वक नम् धातोः निपातनात् ण्यत् ।
6. मूलेन समः मूल्यः पटः = उपादानेन समानफलः ।
7. सीतया समितं सीत्यम् = क्षेत्रम् ।
8. तुलया सम्मितं समानं तुल्यम् (IV-4-91)

तद्धितः :- अनपेते अर्थे । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् (IV-4-92).

तद्धितः :-

1. निर्मितमित्यर्थे छन्दसा = इच्छया निर्मितं छन्दस्यम् स्वेच्छया कृतम् (IV-4-93).
2. उरसा निर्मितं उरस्यः = पुत्रः। अण् च औरसः (IV-4-94).

प्रिय इत्यर्थे हृदयशब्दात् हृद्यः । अत्र हृदयस्य हृत् (VI-3-48) इति

(IV-4-95).

हृदयशब्दात् बन्धने वाच्ये ऋषौ अभिधेये = हृद्यः। ऋषि रित्यर्थे। ऋषिः हृद्यः बद्धः। धर्माचारनिबद्धः नियमितः (IV-4-96).

1. "करणे" मत शब्दात् मतं ज्ञानम् तस्य करणं मत्यम्।
2. "जल्पे" जनशब्दात् जन्यः। जल्पः।
3. कर्ष हलशब्दात् हलकर्म हल्यम् (IV-2-97) तत्र साधुः इत्यर्थे। सामसु साधुः सामन्यः। सामन् + यत्। न तद्धिते(VI-4-144) इति टि लोपे प्राप्ते "ये चाभावकर्मणोः" (VI-4-168) इति (IV-4-98).

**तद्धितः** :- समानतीर्थवासी इत्यर्थे सतीर्थ्यः (IV-4-107)

**समानञ्च तदुदरञ्च समानोदरम्**। तस्मात् शयित इत्यर्थे यत्। समानोदर्यः **समानोदरे** शयति इत्यर्थः तित् स्वरः (VI-1-179) ओकारश्चोदात्तः। अन्योऽनुदात्तः (VI-4-152&IV-4-108).

**छन्दसि** :-

1. भवे इत्यर्थे छ. नमो मेध्याय च विद्युत्याय च (IV-4-110).
2. छ. अग्रे भवः अग्र्यः (IV-4-116).
3. दत्तमित्यर्थे बर्हिः शब्दात् सप्तमीसमर्थात् बर्हिषि दत्तं बर्हिष्यम् छ. (IV-4-119).
4. 1. भाग इत्यर्थे दूतस्य भागः दूत्यम् छ.
   2. "कर्म" दूतस्य कर्म दूत्यम् (IV-4-120).
5. 1. हननी इत्यर्थे येन हन्यते सा हननी। करणे ल्युट्। 'करणाधिकरण' (III-3-117) इति करणे ल्युट् (IV-4-121).
   2. रक्षसां हननी रक्षस्या। यातूनां हननी यातव्या छन्दसि(IV-4-121)
6. प्रशस्ये अर्थे च छ. प्रशंसनम् = प्रशस्यम्। यद्वो रेवत्यम्। यद्वो जगत्यम् (IV-4-122) कृत्यल्युटो बहुलम्(III-3-113) इति भावे क्यप्। रेवत्या + यत्, "यस्येति च" (VI-4-148) इति यलोपः।
7. स्वम् इत्यर्थे असुरस्य स्वम् असुर्यम्। असुर्या नाम ते लोका

(IV–4-123)

8. मत्वर्थे नभांसि विद्यंते यस्मिन् मासे सः नभस्यः मासः। तपस्यः सहस्यः। मधव्यः। ओजो अस्यां तन्वां = ओजस्या तनूः। मधव्या। ओजस्यमहः। तनूः (IV–4-128, 129, 130).

**तद्धितः** :- छ.

9. संस्कृतं इत्यर्थे अप्यं हविः (IV-4-134).

10. मये उत्यर्थे मधव्यः (IV–4-139) अत्र ओर्गुणः (VI–4-146) इति गुणः। वान्तो यि (VI-1-79) इति वान्तादेशः। एवं वसव्यः (IV-4-140).

11. वसु शब्दात् समूहार्थे वसव्यः (IV–4-140)

**तद्धितः** :– तस्मै हितं (V–1-5)इ त्यर्थे उकारान्तात् गवादिभ्यः यत्। शङ्कवे हितं शङ्कव्यम् दारु (V-1-2) आमिक्ष्यम्। अपूप्यम्। नस्यम्। दन्त्यम्। खल्यम्। (V-1–4,5,6,7).

यत् अयं प्राक् हिताद्यत् (IV–4–75) इत्यस्मात् भिन्नः। अयं केवलशब्दात् संज्ञायामेव कैवल्यम्।

**तद्धितः** :– संज्ञायाम्। कम्बल्या फलशतसमिता ऊर्णा। कम्बलाय हिता सा कम्बल्या। संज्ञाभावे कम्बलीया ऊर्णा औत्सर्गिकः छ. (V-1-3)

**तद्धितः** :- (1) "तेन क्रीतम्"इत्यर्थे तस्मात् प्राक् ये तस्मै हितम् इत्यादयोऽर्थाः तेषु हविरपूपादि शब्देभ्यो यत्। हविष्यम्। अपूप्यम्। पक्षे उत्सर्ग प्राप्तः

छः (2)शरीरावयवरत् दन्तेभ्यः हितं दन्त्यम् (V-1-6) नस्यम् (वा)पद्दन्नोमास् (3)खलयवादिभ्यः। खलाय हितं खल्यम्। यवेभ्यः हितं यव्यम् (V–1-7).

**तद्धितः** :- "अशते" शतपरिमाणवाच्याभावे अर्हतीत्यर्थे (V-1-19) शतेन क्रीतः = शत्यः। एक एव पदार्थः। पक्षे ठञ् शतिकः। शते तु-शतकम्। शतसंख्याबोधकसङ्घः (V-1-21).

**तद्धितः** :- अर्हतीत्यर्थे अध्यर्धपूर्वात् पणपक्षादिशब्देभ्यः अध्यर्धशब्दः

संख्यावाचक एव । अध्यर्धपण्यम्-द्विपण्यम् । अध्यर्धपाशम् । अध्यर्ध शत्यं । द्विशत्यम् (V-1-34).

**तद्धितः** :- शाण शब्दात् वा । द्विशाण्यम् । पक्षे ढञ्, तस्य लुक् अध्यर्ध (V-1-28) तेन द्विशाणमित्येव भवति (V–1–35).

**तद्धितः** :- संयोगस्य निमित्तार्थे–केनचित् संयोगः स्नेहः शतनिमित्तः स शत्यः । कश्चित् उत्पातः कलहः शतनिमित्तः स कलहः शत्यः । पक्षे ठन् अण् च (V-1-37).

**तद्धितः** :– गो शब्दादपि उक्तनिमित्ते गो निमित्तं संयोग उत्पातो वा गव्यः । द्व्यचः प्रातिपदिकादपि धननिमित्तं संयोग उत्पातो वा धन्यः । संख्यापरिमाणाश्वादीन् वर्जयित्वा (V-3-39) पुत्रात् छ च । पुत्र्यः । पुत्रीयः (V-1-40).

**तद्धितः** :- वृद्धिः आयः लाभः उपदा वा यस्मिन् दीयते इत्यर्थे शत–शब्दात् शत्यः लाभो दीयते स व्यापारः इति (V-1-47).

**तद्धितः** :- भाग शब्दात् उक्तार्थे भाग्यम् (V-1-49).

**तद्धितः** :-

1. तदर्हति इत्यर्थे शीर्षच्छेद्यः (V-1-65).
2. तदर्हति । दण्डमर्हति दण्ड्यः । मुसल्यः (V-1–66).
3. छ. उदकमर्हति उदक्या । यूपमर्हति = यूप्यः पलाशः (V–1–67).
4. पात्रमर्हति = पात्र्यः । पक्षे घन् पात्रियः (V-1–68).
5. कडङ्करः = तुषः । कडङ्कर्या = गौः कडङ्करमत्ति । दक्षिणामर्हति = दाक्षिण्यः विप्रः । पक्षे छ च । कडंकरीयः । दाक्षिणीयः । (V-1-69).
6. स्थालीबिल्याः तण्डुलाः पाचयितुं योग्याः । पक्षे छः स्थाली बिलीयाः (V-1–70).

**तद्धितः** :- वयसि भूते मासं वयः यस्य मास्यः (V-1-81).

**तद्धितः** :- "संपादिनि" अर्थे कर्मणा सम्पाद्यं कर्मण्यं शरीरम् ।

वेषेण सम्पाद्यो वेष्यो नट: (V-1-100).

**तद्धित:** :– "तस्मै प्रभवति" इत्यर्थे योग्य: पक्षे ठञ् यौगिक: (V–1–102)

**तद्धित:** :, प्राप्त इत्यर्थे कालात् काल्य:, काल्यं शीतम् (V-1-107).

**तद्धित:** :- "भावे" स्तेन शब्दात् नलोप: = स्तेयम् (V-1-125).

**तद्धित:** :- धान्यानां भवने क्षेत्रे = यव्यं क्षेत्रं षष्टिक्यम् । तिल्यम् क्षेत्रम् (V-2-3,4).

**तद्धित:** :- "अलङ्गामी" इत्यर्थे अध्वन्य: । पक्षे ख: (V-2-16).

**तद्धित:** :- "अलङ्गामी अभ्यमित्र: पक्षे छ: ख: (V-2-17).

**तद्धित:** :- इवार्थे शाखा इव शाख्य: गौण: मुखमिव मुख्य: प्रधान: (V-3-103).

**तद्धित:** :- "भव्य" इत्यर्थे द्रुशब्दात् द्रव्य इति निपात: । द्रव्योऽयं राजा शौर्य वात्सल्यादि गुणाविशिष्ट: द्रव्योऽयं माणावक: (V-3-104).

**तद्धित:** :- तादर्थ्ये अग्निदेवतायै इदं = अग्निदेवत्यम् । पाद्यम् अर्घ्यम् (V-4-24) निपातविशेष:-निपातरूपयद्योगे स्वर उदात्त: (VIII-1-30).

## यतुच्

**उणादि** :- तनोते: तन्यु: । वायु: । रात्रि: (442).

## यन्

**छ** :- सगर्भादिभ्य: सगर्भ्य: सचूध्य: (IV-4-114).

## यप्

**तद्धित:** :- वयस्यभिधेये भूते अर्थे द्विगुसमासात् द्वौ मासौ भूतौ = द्विमास्य: । षण्मास्य: । षण्मासात् ण्यत् अपि । षाण्मास्य: (V-1-82,83).

**तद्धित:** :-

1. आहतार्थे यन्त्रे कृतदीनारे = रूप्यम् ।

2. प्रशंसायाम्-प्रशस्तं रूपं अस्य प्रशस्य: = पुरुष: (V-2.120).

## यम्

प्रत्याहार: :- हलोयमां (VIII-4-64).

## यय्

प्रत्याहार: :- अनुस्वारस्य ययि (VIII-4-58).

## यर्

प्रत्याहार: :- यरोऽनुनासिके (VIII-4-45).

प्रत्याहार: :- अचो रहाभ्या द्वे (VIII-4-46).

प्रत्याहार: :- अनचि च (VIII-4-47).

## यल्

तद्धित: :- मत्वर्थे छ वेशो भगशब्दात् वेशो भग्य: यशो-भग्य: (IV-4-131).

## यस्

तद्धित: :- मत्वर्थे कं अस्यास्तीति कंस: शंय: = यस: सित्वात् सिति चेति पूर्वं पदसंज्ञं भवति (V-2-138).

## या

छ :- सुपां सुलुक् (VII-1-39) उरुया धृष्णुया उरुणा धृष्णुना इति प्राप्ते-या

## याच्

छ :- सुपां सुलुक्। साधुया-साधु इति प्राप्ते (VII-1-39).

# याट्

सुप् :- याडापः । सखायै । बहुराजायै (VII-3-113).

# यादि

**प्रत्यय** :- यादि प्रत्यये परे अङ्गे 1) विशेषाः (VII-4-22,36).

# यासुट्

तिङ् :- यासुट् परस्मै पदे (III-4-103) कुर्याम्

# यिट्

**आगमः** :- बहुशब्दात् इष्टे परतः यिट् आगमः । बहुशब्दस्य भू इत्यादेशः । भूयिष्ठः (VII-1-59).

# यु

साधारणो निर्देशः । उत्सृष्टानुबन्धस्य अनुनासिकयणः । तेन युक् त्युकादीनां न ग्रहणम् ।

युक्
युच्-उणादिप्रत्ययः (801).
युट्
ट्युल्
ट्युत्
ण्युट्

अन् आदेशः । युवोरनाकौ (VII-1-1).

# युक्

**आगमः** :- आतो युक् चिण्कृतोः । अधायि । अदायि । धाय, दाय,

धायकः। दायकः (VII-3-33).

युक् णौ परतः।

1. शाधातोः-निशाययति।
2. सा -अवसाययति।
3. ह्वा -ह्वाययति :
4. ख्या -संख्याययति।
5. वे -वाययति।
6. पा -पाययति।
7. पा -रक्षेण न (VII-3-37).

**उणादि** :-भुजि भुज्युः। भाजनम्। मृङ्-मृत्युः (301).

**तिङ्** :- छन्दसि मृज धातोः लिटि णलि अभ्यासस्य रुक् आगमः। धातोः 'युक् आगमः। लघूपधत्वाभावात् मृजेः न वृद्धिः। अनन्तरं यलोपः मर्मृज इति रूपम्। एवं दार्धति (VII-4-65).

# युच्

**उणादि** :- सु-सवनः = चन्द्रमाः। यु-यवनः। रु-रवणः = कोकिलः (232) अश्नोते रशादेशः। युच् रशना (233)

**उणादि** :-उन्देः न लोपः। ओदनः (234) गमेः गश्च। गगनम् (235) अन्यत्रापि युच्। स्यन्दनः। रोचना (236).

**उणादि** :- यजि-यज्युः अध्वर्युः। मनिः-मन्युः (300)

**कृत्** :- चलनशब्दार्थात् चलनार्थात्। चलनः = कम्पनः। शब्दनः = रवणः। अकर्मकादेव। सकर्मकात्तु पठिता विद्याम् (III-2-148).

**कृत्** :- 1. कृच्छ्राकृच्छ्रार्थकेषु ईषदाद्युपपदेषु आकारान्त धातुभ्यः कर्तृकर्मणोः। ईषत्पानः सोमो भवता। सुपानो भवता दुष्पानो भवता। ईषद्दानो गौः (III-3-128).

2. छ. गत्यर्थेभ्यः। सूपसदनोऽग्निः (III-3-129).

3. छ॰ गत्यर्थेभ्यः। सुवेदनामकृणोद् ब्रह्मणे गाम् (III-3-130)

4. भाषायाम् । दुश्शासनः । दुर्योधनः (वा) ।

# युट्

तिङ् :- दीङो युडचि क्ङिति (VI-4-63) दीङ्-क्षये दिवादिः । आत्मनेपदि लिटि अचि क्ङिति । दी+ए=दिदी+ए । एरनेकाचः (VI-4-82) इति यणि प्राप्ते युट् नित्यत्वात् । दिदीये । अत्र युडपेक्षया परत्वात् (V-4-82) एरनेकाच इति यण् प्राप्तः । तथा च दिद्ये इति प्राप्तः । तथाऽपि वुग्युटौ उवङ्यणोः सिद्धौ इति (वा) तेन दिदीये इति सिद्ध्यति ।

# युन्

**उणादिः**– हन्तेः युन् आद्यान्तयोः। घत्वतत्वे। घातनः मारकः (720).

# युव

**आदेशः** :– युवावौ द्विवचने । युवाम् (VII-2-92).

**संज्ञा** :– युवप्रत्यय इति प्रत्ययविशेषः ।

1. पौत्रप्रभृति यदपत्यं तत् गोत्रसंज्ञम् । "अपत्यं पौत्रप्रभृति गोत्रम्" (IV-1-162).

2. 1) वंश्ये पित्रादौ जीवति पौत्रादेः चतुर्थस्यापत्यं युवसंज्ञम् । न गोत्रसंज्ञम् (IV-1-166).
   2) भ्रातरि च ज्यायसि जीवति कनीयान् (IV-1-164).
   3) वान्यस्मिन् सपिण्डे स्थविरतरे जीवति (IV-1-165).
   4) वृद्धस्य च पूजायाम् (IV-1-166).
   5) यूनश्च कुत्सायाम् (IV-1-167).

3. युवप्रत्ययविधाने नियमाः । 1) गोत्रप्रत्ययान्तात् 2) अपत्य-

प्रत्ययान्तात् वेति ।

1) एको गोत्रे (IV-1-93).

2) गोत्राद्यूनि अस्त्रियाम् (IV-1-94).

4. प्रत्ययलोप: 1) यूनि लुक् (IV-1-90) 2) फक्फिञोरन्य: (IV-1-91).

# युस्

तद्धित: :-

1. मत्वर्थे । ऊर्णा अस्यायमस्तीति ऊर्णायु: (V-2-123).
2. मत्वर्थे । कंयु: । शंयु: (V-2-138).
3. मत्वर्थे । अहंयु: । शुभंयु: (V-2-140) अत्र युस् प्रत्ययस्य सित्वात् सिति चेति (I-4-16) पूर्वस्य पदसंज्ञा । पूर्वस्य पदत्वात् 'मोऽनुस्वार:' (VIII-3-23) इति मकारस्यानुस्वार: । अनुस्वारस्य ययि परसवर्ण: (VIII-4-58).

# यूय

आदेश: :- यूयवयौ जसि । यूयम् (VII-2-93).

# र

इत् । फलम् । उपोत्तमं रिति (VI-1-217) प्रत्ययस्यान्तं उत्तमं, तत्समीपम् उपोत्तमम् । रिप्रत्ययस्योपोत्तममुदात्तं भवति । यदाहवनीये ।

प्रत्याहार: :- रलयोर्ग्रहणम् । उरण्रपर (I-1-51).

आदेश: :- ऋकारस्य "र" इत्यादेश: हलादे: लघो: इष्ठेमेयस्सु परेषु । पृथु-प्रथिष्ठ: । प्रथिमा । प्रथीयान् (VI-4-161) छन्दसि वा । रजिष्ठमेति पन्थानम् । त्वमृजिष्ठ: (VI-4-162).

आदेश: :- अहन् इति शब्दस्य नकारस्य । अहरह: (VIII-2-69).

**लुक्** :- नम्यादिभ्यः । नम्रः । कम्प्रः । कम्रः (III-2-167).

**तद्धितः** :- चातुरार्थिकः । अश्मादिभ्यः । अश्मरः (IV-2-80).

**तद्धितः** :- मत्वर्थे । ऊषरं क्षेत्रं । सुषिरं काष्ठम् । मुष्करः पशुः । मधुरः गुडः (V-2-107).

**निपातः** :- तमस् शब्दात् मत्वर्थे इकारो रप्रत्ययश्च निपात्येते । तमिस्रः (V-2-114).

**तद्धितः** :- ह्रस्वत्वे । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः (V-3-88).

**स्त्रीप्रत्ययः** :- वनो र च । पीवरी । शर्वरी (IV-1-7).

# रक्

**तद्धितः** :- अपत्यार्थे रक् गोधाया अपत्यं गौधारः । सूत्रे आरक् प्रत्ययः । वार्तिककारमते रक् प्रत्ययः (IV-1-130) रकि ज्यः । प्रसारणम् (I-I-4).

**उणादि** :- स्फायि ताञ्चिप्रभृतिभ्यः स्फार इत्यादि शब्दविशेषेभ्यः आगमविशेषश्च । (170) प्रभृति (180) पर्यन्तम् ।

# रण्

**तद्धितः** :- अग्नीधः = शरणे रण् भं च (वा) तस्येदम् (IV-3-120). सूत्रम् । अग्निमिधे = अग्नीत् । तस्य स्थानं आग्नीध्रम् । तात्स्थ्यात् सोऽप्याग्नीध्रः ।

# रदानुक्

**कृत्** :- जीवेरदानुक् (वा) शिवसूत्र 5) भाष्यम् । जीरदानुः तैत्तिरीयसंहिता ।

# रन्

**उणादि** :– वृधिः वर्ध्रिः = चर्म । वपि–वप्रः प्रकारः इत्यादयः रन्नंता निपाताः (185&186).

**तिङ्** :- झस्य रन् (III-4-105) एधेरन् ।

# रम्

**आगमः** :– भ्रस्जो रोपधयोः (VI-4-47) भ्रस्ज धातोः रेफस्य उपधायाश्च स्थाने वा रम् आगमः । बभर्ज । बभर्जतुः । रमभावपक्षे–बभ्रज्ज बभ्रज्जतुः इत्यादि ।

# रल्

**प्रत्याहारः** :– रलो व्युपधात् हलादेः संश्च (I-2-26).

# रस्

तिङ् :- लुटः प्रथमस्य डारौ रसः । भवितारः (II-4-85).

# रिक्

तिङ् :– ऋदुपदस्य धातोः अभ्यासस्य रिक् रीक् रुक् एते आगमा स्युः । यङ् लुकि एते आगमाः । ऋदन्तधातोरपि भवन्ति । रिकि इकारः श्रूयते । रुकि उकारः उच्चारणार्थः । वरीवृतीति । चरिकर्ति (VII-4-91&92).

**आगमः** :– तरित्रतः तरतेः छ· (VII-4-65) अभ्यासस्य रिक् ।

## रिङ्

तिङ् :- आदेशः । ऋकारान्तस्य अङ्गस्य शे परे यकि परे यकारादि लिङ् परे असार्वधातुके रिङ् ।

1. भवति- दृ तुदादिरात्मनेपदि शविकरणः । आदृ + श + ते

आद्रि + अ + ते + इयङ् । अचिश्नु (VI-4-77) आद्रियते ।

2. यक्-क्रियते-कृ इत्यस्य रिङ् ।

3. लिङ्-क्रियात् । अत्र यकारादौ प्रत्यय एव । कृषीष्ट । हृषीष्ट (VII-4-28).

# रित्

रेफेत् प्रत्ययः ।

# रिल्

तद्धितः :- ऊर्ध्वस्य उप इति निपातः । उपरि (V-3-31).

# रिष्टातिल्

तद्धितः :- ऊर्ध्वस्य उप इति निपातः । उपरिष्टात् (V-3-31).

# रीक्

आदेशः :- अभ्यासे ऋदुपधस्य । नरीनर्ति । चेक्रीयते (VII-4-90).

आगमः :- सरीसृपत्-सृपेः । वरीवृजत्-वृजेः छन्दसि अभ्यासस्य रीक् (VII-4-65).

## रीङ्

तिङ् :- ऋकारान्तस्य अङ्गस्य अकृत् यकारे, असार्वधातुके यकारे च्वौ च परतः रीङ् । चेक्रीयते । मात्रीयते-मात्रीयति । मात्रीभूतः (VII-4-27)

## रुः

उणादि :- मि-मेरुः । पि-पेरुः (541).

जत्रु । अश्रु (542).

कृत् :- दारुः । धारुः (III-2-159).

**आदेश**: :- ससजुषोरुः (VIII-2-66) पदान्तस्य सस्य सजुष् शब्दस्य च रुः स्यात् । झलां जशोऽन्ते (VIII-2-39).
इत्यस्यापवादः । पदाधिकारत्वात् वायु+सु, वायु+रु=वायुरु इति । वायुरत्र । सपूर्वक जुषेः क्विपि षस्य रुः । सजूर्देवेभिः । रुरयं उकारानुबन्धयुक्तो रेफः अन्यरेफात् भिन्नः । प्रातर् इति रेफान्तमव्ययम् । भ्रातृ शब्दात् सम्बुद्धिः सुः । ऋतो ङि (VII-3-110) इति गुणः रपरः । हल्ङ्यादि (VI-1-68) इति सुलोपः । हे भ्रातर् । अत्रोभयत्रापि रेफस्य उत्वं न । रुरयम् एतयो भिन्नः । रु इत्यस्य सन्धिकार्ये विशेषः

1. अतो रोरप्लुतादप्लुते (VI-1-113) हशि च (VI-1-114) अतः परस्य रोः उत्वं स्यात् ।
2. भो भगो अघो अपूर्वस्य योऽशि (VIII-3.17,22) एतेषां सकारस्य रुत्वं, रुत्वस्य यत्वं, यत्वलोपः ।
3. खरवसानयोर्विसर्जनीयः (VIII-3-15) रोः विसर्गः ।
4. रोः सुपि (VIII.3-16) पयःसु । रोरेव नान्यस्य । गीर्षु ।
5. अहन् (VIII-2-68) रुः स्यात् पदान्ते । अहोभ्याम् । अहोभिः ।
6. रोऽसुपि (VIII-2-69)अह्नो रेफः स्यात् न रुः असुपि परे । रोरपवादः । अहर्गणः । अहरहः । एवं निरनुबन्ध 'रोः,रेफस्य, च भेदः स्पष्टः । रुविधौ पूर्वत्रासिद्धनियमो नास्ति । अतो रोरप्लुतादप्लुते (VII-1-113,114).

रुविधिस्थानानि :-

1. सकारस्य ससजुषो रुः (VIII-2-66) वायुरत्र । सजूर्देवेभिः
2. रुत्वान्तनिपाताः । अवयाः श्वेतवाः (VIII-2-67) अवया जस्य रुत्वम् । पुरोडा इत्यत्र शस्य श्वोतवा इत्यत्र हस्य रुत्वं सुपि परतः ।
3. अहन्निति पदस्य रुः । अहोभ्याम् । अहोभिः (VIII-2-68).
4. सिपि धातो रुर्वा (VIII-2-74) अचकास्त्वम् । अचकात्वम् । दश्च(VIII-2-75) अभिनस्त्वम् । अभिनत्वम् ।

5. मतुवसो रुः सम्बुद्धौ छ· इन्द्रमरुत्व इह पाहि सोमम्। मीढ्वस्तोकाय (VIII-3-1).

6. समः सुटि (VIII-3-5) संस्कर्ता संस्कर्ता अत्रानुनासिकः (VIII-3-2).

7. पुमः खय्यम्परे। पुंस्कामा । पुंस्कामा । पुंश्चली । पुंश्चली (VIII-3-6).

8. नश्छव्यप्रशान् । भवांश्छादयति । भवांष्टीकते (VIII-3-7).

9. उभयथर्क्षु । नकारान्तस्य रुर्वा, नकारोवा छवि परतः अम्परे । तस्मिंस्त्वा दधाति । तस्मिन् त्वा दधाति (VIII-3-8).

10. दीर्घादटि समाने पदे । महां इन्द्रो य ओजसा (VIII-3-9).

11. नॄन् पे । नॄँः पाहि । नॄः पाहि (VIII-3-10).

12. स्वतवान्पायौ। स्वतवाँः पायुरग्ने (VIII-3-11).

13. कानाम्रेडिते । कांस्कानामन्त्रयते (VIII-3-12).

## रुक्

**तिङ्** :- ऋधुपधस्य धातोः तथा ऋदन्तस्य धातोः यङ्लुकि रुक्, अभ्मासस्य रिक् रीक् इत्यपि । रुकि क इत् । उः उच्चारणार्थः । वर्वर्ति । चर्कर्ति (III-4-91,92).

**आगमः** :- मर्मृज्य-मृजेः । लिटि णलि अभ्यासस्य रुक् । धातोः युक् अलघूपधत्वात् वृद्धिः न (VII-4-62).

## रुट्

**तिङ्** :-

1. शीङो रुट् झस्य । शेरते (VII-1-6).

2. वेत्तेर्विभाषा। वेत्तेरिह लुक्विकरणः। संविद्रते। संविदते (VII-1-7)

3. छन्दसि विषये बहुलं रुट् । देवा अदुह्र । गन्धर्वा अदुह्र दुहे र्लङि हकारस्य अदादेशो रुट्। "लोपस्त आत्मनेपदेषु" (VII-1-41)

इति तलोपः । बहुलवचनात् अन्यत्रापि भवति·अदृश्रमस्य केतवः इत्यादि (VII-1-8).

## रूपप्

**तद्धितः** :- स्वार्थे । स्वार्थिकाः प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतकाः भवन्ति । प्रशस्तो वैयाकरणः वैयाकरणरूपः । पचतिरूपम् (V-3-66).

**तद्धितः** :- तत आगत इत्यर्थे :-

## रूप्य

1. समरूप्यम् । विषमरूप्यम् ।
2. मनुष्यात् । देवदत्तात् प्राप्तं = देवदत्तरूप्यम् । पक्षे छः अपि (IV-3-81).

**तद्धितः** :- "षष्ठ्या रूप्य च" (V-3-54). देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः ।

## रे

**तिङ्** :- इयरो रे (VI-4-76) छन्दसि । दध्रे । इरे इत्येतस्य छन्दसि वा रे ।

## रौ

**तिङ्** :- लुटः प्रथमस्य डारौरसः । भवितारौ (II-4-85)

## र्हिल्

**तद्धितः** :-"इदमो र्हिल्"इदं शब्दात् सप्तम्यन्तात् र्हिल् । इदं शब्दस्य एतेतौ रथोः (V-3-4) इति एतादेशः । एतर्हि (V-3-16).

**तद्धितः** :- छ तत् शब्दात् । तर्हि । दानीम् प्रत्ययोऽपि । तदानीम् (V-3-20).

**तद्धितः** :- अनद्यतने भाषायाम् । कर्हि यर्हि तर्हि । दाप्रत्ययोऽपि । कदा । यदा । तदा (V-3-21).

**तद्धितः** :- तयोर्दार्हिलौ च छन्दसि । इदमः तदश्च क्रमेण दार्हिलौ भवतः काले वाच्ये । अस्मिन् काले इदा । तस्मिन् काले तर्हि । पक्षे दानीमपि । इदानीम् । तदानीम् (V-3-20).

## ल्

**इत्** :- लशक्वतद्धिते (1-3-8)ल्युट् च (III-3-115)हसनम् । शोभनम् । इत् फलम् । "लिति" (VI-1-193)आद्युदात्तः । चिकीर्षकः ।

**तिङ्** :- "लस्य" (III-4-77)अत्र अकार उच्चारणार्थः । न इत् । ल इति स्थानिनिर्देशः । लकाराः दश वर्तमानादिकालविशेषवाचकाः । तत्र षट् टितः । चत्वारो ङितः ।

"तिप्तस्झि"(III-478)इत्यादयः लादेशाः ।

**आदेशः** :- रेफस्थाने-

1. कृपो रो लः (VIII-2-18) कल्प्ता । क्लुप्तम् ।
2. उपसर्गस्यायतौ(VIII-2-19)प्लायते वारः बालः इत्यादि(वा)
3. ग्रो धातोः यङि नित्यं लः । निजेगिल्यते । गार्ह्यां यङ् अजादिप्रत्यये परे तु वा । निगिरति । निगिलति (VIII-2-20,21)
4. परेश्च घाङ्कयोः (VIII-2-22) परिघः । पलिघः । पर्यङ्कः । पल्यङ्कः । परियोगः । पलियोगः (वा)

## ल

**तिङ्** :- लसार्वधातुकमनुदात्तं भवति । कर्ता । सूते (VI-1-86).

**उणादि** :- कुषेः-कुल्मलम् = पापम् । कुष्मलमपि (627).

**तद्धितः** :- लः प्रत्ययोऽस्य चक्षुषी इत्यर्थे चिल् पिल् क्लिन्न इत्यर्थे द्वावादेशौ चिल्लः । क्लिन्ने चक्षुषी चिल्लः । पिल्लश्च । चुल्लश्च (वा) इनच्पिटच्चिकचि च (V-2-33) सूत्रे ।

# लक्

**उणादि** :- शीङ् धातोः । शीलम् (478).

## लङ्

**तिङ्** :- "हशश्वतोर्लङ् च"(III-2-116) शश्वदकरोत् ।

**तिङ्** :- भूतनद्यतने लङ् । अभवत् (III-2-111).

**स्मोत्तरे माङि**(III-3-176) **प्रश्ने** चासन्नकाले (III-2-117) अयजत्-देवदत्तः ।

# लच्

**तद्धितः** :-

1) "प्राणिस्थादातो लजन्यतरस्याम्" (V–2-96) इत्यर्थे । चूडालः । चूडावान् ।

2) **सिध्मादिभ्यश्च** (V-2-97) सिध्मलः । सिध्मवान् ।

3) अंसलः = बली (V-2-98).

# लट्

**तिङ्** :- वर्तमाने लट् । भवति । एधते (III-2-123).

**कृत्** :-

1) लटः शतृशानचावप्रथमासमानाधिकरणे (III–2-124) पचन्तं तं पश्य ।

2)संम्बोधने च (III-2–125) हे पचन् ।

3) क्रियाया लक्षणे = परिचायके । शयाना भुञ्जते यवनाः । क्रियाया हेतौ–हरिं पश्यन् मुच्यते (III-2-126).

**तिङ्** :- लिडर्थे । यजति स्म रामः (III–2-118).

1) अनद्यतनभूतार्थे । एवं स्म पिता ब्रवीति (III-2–119) भूतसामान्ये

किमकार्षीः ।

ननु करोमि भोः अकार्षमित्यर्थे (III-2-120).

2) नन्वोर्विभाषा । किमकार्षीः न करोमि ? नाकार्षम् । अहं नु करोमि । अहंन्वकार्षम् (III-2-121).

3) पुराशब्दप्रयोगे अस्मे । भूतानद्यतने विभाषा लुङ् लट् च । पक्षे लङ् । वसन्तीह पुरा छात्राः । पुरा छात्रा आवात्सुः । पक्षे अवसन् स्मयोगे यजति स्म पुरा । अस्मिन् सूत्रे पुरि इति शब्दः पुरा शब्दे सति इत्यर्थस्य बोधकः (III-2-122).

भविष्यदर्थे :-

1) यावत्पुराशब्दौ यदा निपातौ निश्चयद्योतकौ तदा लट् । यावत् भुंक्ते । पुरा भुंक्ते । भोक्ष्यते, निश्चयेन । यावदेतान् निरीक्षेऽहं निश्चयेन द्रक्ष्यामि । एतयोः निपाताभावे पुरा यस्यति । पुर् इति यानसाधनम्, तेन यास्यति (III-3-4).

2) विभाषा कदाकर्ह्योः । कदा भुंक्ते–भोक्ष्यते । कर्हि भुङ्क्ते–भोक्ष्यते (III-3-5).

तिङ् :-

3) किं वृत्ते लिप्सायाम् । किंवृत्तशब्देन डतरडतमान्तानामेव ग्रहणम् । कं, कतरं, कतमं वा भोजयिष्यसि-भोजयसि । लिप्साभावे कः काशीं गमिष्यति (III-3-6).

4) लिप्स्यमानसिद्धौ योऽन्नं ददाति, दास्यति, दाता वा स स्वर्गं याति यास्यति याता वा (III-3-7).

5) लोडर्थं लक्ष्यते येन तस्मिन्नर्थे वर्तमानात् धातोः भविष्यति लट् वा । कृष्णश्चेत् भुंक्ते त्वं गाश्चारय अत्र कृष्णभोजनं गोचारणप्रेषस्य लक्षणम् । पक्षे कृष्णाश्चेत् भोक्ता, भोक्ष्यते वा (III-3-8).

तिङ् :- औध्र्वंमौहूर्तिके ऊर्ध्वंमुहूर्तात् भवः इत्यर्थे । मुहूर्तादुपरि

उपाध्यायश्चेदागच्छति, आगन्ता, आगच्छेत्त्वमधीष्व (III-3-9).

तिङ् :-

1) वर्तमानसमीपे भूते कदा आगतोऽसीति प्रश्नः । अयमागच्छामि = अव्यवहितपूर्वकाले आगतवान् । वर्तमानसमीपभूते इत्यर्थः ।

2) वर्तमानसमीपे भविष्यति । कदा गमिष्यसि इति प्रश्नः । एष गच्छामि । वर्तमानसमीपे भविष्यति लट् (III-3-131).

तिङ् :- गर्हायां लडपि जातु शब्दात् । जातु गणिकामादत्से । अपि शब्दात् । अपि भार्यां त्यजसि (III-3-142).

तिङ्:- आशंसायां भूतवच्च (III–3-132) देवश्चेदवर्षीत् वर्षति वर्षिष्यति वयं धान्यमवाप्स्म, वपामः वपिष्यामः ।

तिङ् :- च्लिलुङि (III.1-43) इत्यत्र लिङ् इत्यनेन सिच् वस इत्यादीनां संग्रहः

## लि

तिङ् लिरिति च्छि संज्ञा प्राचाम् । छ गमि = अग्मन् । लेर्लुक् । जनि - अज्ञत वा अस्य दन्ताः (II-4-80) उपधा ह्रस्वः । गमहन (VI-4-98).

## लिङ्

तिङ् :- विधि लिङ् 1) विधिः प्रेरणम् 2) निमन्त्राणां नियोगकरणम् आमन्त्रणं कामचारकरणम् 4) अधीष्टः सत्कारपूर्वको व्यापारः 5) संप्रश्नः संप्रधारणम् एष्वर्थेषु कुर्यात् (III-3-61)

आशीषिर्लिङ् । आशिषि अप्राप्तस्येष्टार्थस्य प्राप्तुमिच्छा । चिरं जीवेत् लोट् च । जीवतु (III-3-173).

तिङ् :- शक्यार्थे । अयं भारः त्वया वोढव्यः, वहनीयः, वाह्यः = त्वं भारं वहेः । स वहेत् (III–3-172).

तिङ् :- विभाषा कथमि । कथं धर्मं त्यजेः । पक्षे लट् । कथं धर्मं

त्यजसि (III-3-143).

**तिङ्** :- आशंसायम् प्राप्तीच्छावाचकशब्दे उपपदे भविष्यदर्थे लिङ् गुरुश्चेदुपेयात् आशंसे अधीयीय । "आशंसायां भूतवच्चेति (III-3-132) इत्यस्यापवादः ।

"विभाषा । कथमि" गर्ह्यायाम् । कथं धर्मं त्यजेः - त्यजसि वा(III-3-14

तिङ् किंवृत्ते कः हरिं निन्देत् निन्दिष्यति (III-3-144).

अनवक्लृप्तिः असम्भावना । अमर्षो अक्षमा । न सम्भावयामि, न मर्षये भवान् हरिं निन्देत्, निन्दिष्यति (III-3-145).

**तिङ्** :- उत शब्दः अपि शब्दः यदा समर्थौ समानार्थबोधकौ तदा लिङेव नान्यो लकारः । अपि हन्यादघं हरिः ? उत हन्यादघं हरिः । यदा उतापी न समानार्थकौ तदा न लिङ् । उत दण्डः पतिष्यति ? अपि धास्यति द्वारम् (III-3-152).

तिङ् :- कामप्रवेदने–इच्छार्थद्योतने । कामं भुञ्जीत भवान् । कच्चिदुपपदे अविद्यमाने । कच्चिति तु कश्चिज्जीवति ते माता (III-3-153)

**तिङ्** :- 1) सम्भावनेऽलमिति चेत् सिद्धिप्रयोगे–अपि गिरिं शिरसा भिन्द्यात् । सिद्धप्रयोगे तु अलं कृष्णो हस्तिनं हनिष्यति (III-3-154).

2) सम्भावना वचने वा यत् शब्दाभावे । सम्भावनावाचक-धातौ उपपदे–सम्भावयामि भुञ्जीत, भवान्, भोक्ष्यते भावन् ? यद्योगे सम्भावयामि यत् भुञ्जीत भवान् (III-3-155)

**तिङ्** :- हेतु हेतु मद्भावे वा । कृष्णं नमेच्चेत् सुखं यायात् । कृष्णं नंस्यति चेत् सुखं यास्यति (III-3-156).

इच्छार्थेषु लिङ् लोटौ । इच्छामि भुञ्जीत भवान् । इच्छामि भुङ्ताम् भवान् (III-3-157).

**तिङ्** :- समानकर्तृकेषु। अहं भुञ्जीय इति इच्छति सः (III-3-159).

**तिङ्** :- इच्छार्थेषु विभाषावर्तमाने। इच्छेत्। इच्छति। विध्यादयः सर्वेप्यर्थाः (III-3-110).

**तिङ्** :- लिङ् चोर्ध्वमौहूर्तिके (III-3-164) एतत् समानाक्षरकं सूत्रम् (III-3-9) पूर्वं पठितम् अक्षरसाम्येप्यर्थे भेदः। अत्र मुहुर्तात् उपरितन कालिके विद्यमानात् धातोः प्रैषातिसर्गप्राप्तकालेषु लिङ् लोट् कृत्याश्च। यजेत। यष्टव्यम्। (III-3-164).

**तिङ्** :- लिङ् यदि कालः समयो वेला वा। यत् भुञ्जीत भवान् (III-3-168).

**तिङ्** :- अर्हे कृत्यतृचश्च। चाल्लिङ्। त्वं कन्यां वहेः (III-3-169).

1) जातु यत् यदा यदि वा। त्वादृशो हरिं निन्देत् नावामर्षयामि, नावकल्पयामि (III-3-147).

2) यच्च यत्र वा। त्वमेवं कुर्याः न श्रद्धधे न मर्षयामि (III-3-148).

3) गर्हायाम् यच्च यत्र वा। त्वं शूद्रं याजयेः, अन्याय्यं तत् (III-3-149).

4) चित्रीकरणे च यच्च यत्र वा। त्वं शूद्रं याजयेः, आश्चर्यमेतत्। (III-3-150).

# लिट्

**तिङ्** :- भूतानद्यतनपरोक्षेऽर्थे वर्तमानात् धातोः। बभूव। चकार।

**तिङ्** :- उत्तमविषयेऽपि परोक्षता चित्तव्याक्षेपात्। सुप्तोहं किल विललाप।

**तिङ्** :- अत्यन्तापह्नवे (वा) किं कलिङ्गेषु स्थितोऽसि? नाहं कलिङ्गान् जगाम (III-2-115).

**तिङ्** :- भूतानद्यतनपरोक्षे इति ह चकार। शश्वच्चकार (III-2-116). अत्र विषये लङ् अपि भवति।

**तिङ्** :- प्रश्नेचासन्नकाले–लिट् लङ् च। कश्चित् कंचित् पृच्छति

किमयजत् देवदत्तः ? तस्योत्तरम्–अजयत् देवदत्तः? इयाज देवदत्तः ? (III-2-117).

**तिङ्** :– परस्मैपदि प्रत्ययाः लिटि "णलतुसु (III-4-82).

**तिङ्** :– लिटि परतः धातोरभ्यासः । लिटि धातोः (VI-1-8).

लिटि परे अभ्यासभिन्नस्य एकाच्कस्य प्रथमस्य धात्ववयवस्य द्वे उच्चारणे स्तः । अत्र एकाच इति कर्मधारयः ।

**तिङ्** :– लिटि कास् धातोः प्रत्ययात् अन्येभ्यश्च धातुभ्यश्च आम् प्रत्ययो भवति बोभूयाञ्चकार (III-1-35,42).

# लित्

**प्रत्ययाः** :– लकारेतः ल्युट्, तातिल्, तल्, तसिल्, भक्तल् । लित् प्रत्ययात् पूर्वमुदत्तः भवति । चिकीर्षकः । भौरिकिविधम्(VI-1-193).

# लुक्

**तिङ् : आगमः** :– "पा" रक्षणे लुग्विकरणधातोः लुक् आगमः णौ परतः । पालयति (वा) (VII-3-37).

**आगमः** :– ली धातोः लाधातोश्च नुक्लुक् आगमौ णौ स्नेहविपातने अर्थे ली = घृतं विलीनयति । नुक् । विली + लुक् + णि + ति = विलाययति । ला = विलालयति-लुक् । विलापयति पुक् (VII-3-39).

**संज्ञा** :– अदर्शनं लोपः (I-1-60) इति सूत्रे लोप इति संज्ञा विहिता । अदर्शनशब्दस्य तावत् अनुच्चारणम् अनुपलब्धः, अभावः, वर्णस्य नाशः इत्यादयोऽर्थाः । तत्र शब्दानुशासनप्रस्तावात् अस्मिन् शास्त्रे अदर्शन शब्दस्य श्रवणाभाव इत्यर्थः साधु । अदर्शनमिति अव्ययीभावः समासः, अर्थाभावे अव्ययीभावः । गोधाया ढ्रक् (IV-1-129) इत्यत्र ढकारस्थाने आयनेयीति (VII-1-2) इति सूत्रेण एय् इति आदेशे कृते गोधा + एय् + र इति जाते "लोपोव्योर्वलि" (VI-1-76) इति यलोपे गौधेर इति रूपम् । आदेशत्वेन प्रसक्तस्य "एय्" इति यकारस्य लोपः । यकारस्य

अदर्शनं इति यावत् ।

एवमदर्शनं यदा प्रत्ययस्येष्टं तदा तस्य त्रयः प्रकारा भवन्ति । लुक्, श्लु ,लुप् इति त्रिभिः प्रकारैः कस्यचित् प्रत्ययस्थ वर्णस्य, प्रत्ययस्य वा लोपो विधीयते । लुक् संज्ञा भवति । अदर्शनं लुक्संज्ञकम् । श्लु संज्ञा-भावितमदर्शनं श्लु संज्ञकम् । एवं लुप् संज्ञकम् । लोपरूप फलस्यै-कत्वेऽपि प्रक्रियाभेदात् एतासां संज्ञानां सङ्करः कदापि न भवति ।

1. लुकसंज्ञाभावितः प्रत्ययलोपः-

फले लुक् (IV-3-163) इत्यत्र विकारावयव प्रत्यययोः लोपे आमलक्या फलं = आमलकम्, । पल्लवित वृक्षस्य विकारः पल्लवः इति । अत्र प्रत्ययलोपः लुका विहितः ।

2. श्लु सज्ञाभावितः प्रत्ययलोपः :–

जुहोत्यादिभ्यः श्लुः (II-4-75) हु धातोः प्राप्तस्य शप् इत्यस्य श्लु इत्यनेन लोपो विहितः अभ्यासविधिश्च । जुहोति । अत्र प्रत्ययलोपः श्लु इत्यनेन विहितः ।

3. लुप्संज्ञाभावितः प्रत्ययलोपः :–

जनपदे लुप् (IV-2-81) चातुरार्थिकप्रत्ययस्य "देशे तन्नाम्नीति" विशेषे जनपदे अभिधेये लुप् भवति । पञ्चालानां देशः निवासो जनपदः पञ्चालाः । एवं वङ्गाः । कलिङ्गाः । अत्र "तस्य निवासः "(IV-2-69) इति प्राप्तस्य प्रत्ययस्य लुपा लोपः । अत्र विशेषः । "प्रत्ययलोपे प्रत्यय-लक्षणम्" (I-1-62) इति शास्त्रस्य अपवादोऽयम् । प्रत्ययस्य लुक् श्लु लुपः इति (I-1-61) इति यो लोपो विहितः तत्र प्रत्ययलक्षणमित्यस्य इति प्रतिषेध इति न लुमताङ्गस्य (I-1-63) सूत्रम् । यथा कति + जस् इति स्थिते कति शब्दस्य डत्यन्तत्वात् डति च (I-1-25) इति षट् संज्ञत्वात् "षड्भ्यो लुक्" (VII-1-22) इति जस् इत्यस्य लुक् । अत्र प्रत्ययलोपे प्रत्ययलक्षणं इति गुणः प्राप्तः । लुका लुप्तत्वात् गुणो न भवति ।

## लुङ्

भूतार्थवृत्तेः धातोः लुङ् । अभूत् (III-2-110).

तिङ् :– च्लि लुङि– (III-1-43 to 66).

1. च्लेः सिजादेशः – स्पृशमृश (वा) (III-1-44).
2. च्लेः क्सादेशः – "शल इगुपधादनिटः क्सः" (III-1-45&47).
3. च्लेः चङादेशः – णिश्रिद्रुस्रुभ्यः (III-1-48&51).
4. च्लेः अङ् आदेशः – अस्यति (III-1-52&59).
5. प्रथमैकवचनस्य चिण्-"चिण् ते पदः" (III-1-60&65).

तिङ् :– माङि लुङ् । मा भवान् भूत् (III-3-175) स्मोत्तरे माङि (III-3-176).

तिङ् :– पुरि लुङ् चास्मे । अत्र पुरा छात्रा अवात्सुः, अवसन्, ऊषुः (IV-2-122).

# लुट्

तिङ् :– स्यतासी लृलुटोः लुट् परतः तास् । भविता । भोक्ता (III-1-33).

तिङ् :– लुटः प्रथमस्य डारौ रसः (II-4-85).

तिङ् :– अनद्यतने लुट् । भविष्यत्यनद्यतनेऽर्थे धातोः लुट् । भविता (III-3-15).

# लुप्

संज्ञा :– प्रत्ययस्य लुक् श्लु लुपः (I-1-61) इति प्रत्ययलोपे कर्तव्य प्रकारविशेषः लुप् संज्ञाभावितः प्रत्ययलोपः । (पश्य लुक्) "जनपदे लुप्" (IV-2-81) देशे तन्नाम्नीति जनपदविशेषे अभिधेये चातुरार्थिकप्रत्ययस्य लोपः । पञ्चालानां निवासः = पञ्चालाः ।

अयं लुक्संज्ञाप्रेरितप्रत्ययलोपात् भिन्नः "लुपि युक्तवत् व्यक्ति-वचने (I-2-51) इति लुपसंज्ञया लुप्तस्य प्रत्ययस्य अर्थविशेषः । युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्धः प्रकृत्यर्थयुक्तप्रत्यये लुप्ते व्यक्तिवचने लिंगवचने भवतः सप्तम्यर्थे वतिः । पञ्चालाः क्षत्रियाः तेषां निवासोदेशः अपि पञ्चालाः ।

लुप्तेऽपि प्रत्यये तेषां लिङ्गः संख्या च वर्तेते । अयं लुप्संज्ञाकृतप्रत्ययलोपे विशेषः । लुक्संज्ञाकृते प्रत्ययलोपे तु फले लुक् (IV-3-163) आमलकमित्येव न लिङ्गसंख्ये ।

## लुमत्

न लुमाताङ्गस्य (I-1-63).

### लृङ्

**तिङ्** :- लिङ् निमित्ते लृङ् क्रियातिपत्तौ–सुवृष्टिश्चेदभविष्यत् सुभिक्षमप्यभविष्यत् । हेतुहेतु मतोः लिङ् (III-3-156) इत्यत्र हेतुःकारणं हेतुमत् कार्यं उभयमपि लिङो निमित्तभूतम् । कृष्णं नमेच्चेत् सुखं यायादित्यत्र कार्यं कारणञ्च निर्दिष्टम् । तत्र लिङ्निमित्ते यदा क्रियातिपत्तिः केनापि हेतुना कार्यानुत्पादः तदा भविष्यति लृङ् (III-3-139).

"भूते च" पूर्वभविष्यति लृङ् इह भूतेऽपि । भूते च काले लिङ् निमित्ते क्रियातिपत्तौ = भवत्पुत्रः अन्नार्थी इतस्ततः चङ्क्रम्यमाणः मया अवलोकितः तथा अन्योपि कश्चित् द्विजः श्राद्धकर्मणि भोजनाय कञ्चित् ब्राह्मणं मार्गमाणो मयावलोकितः । यदि भवत्पुत्रः तेन दृष्टोऽभविष्यत्तदा स अभोक्ष्यत, भवत्पुत्रः न तु भुक्तवात् । मन्ये सः अन्येन पथा यातः । (III-3-140).

**तिङ्**: :- वोताप्योः(III-3-141) उताप्योः समर्थयोः लिङ् (III-3-152) भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा । कथं नाम तत्रभवान् वृषलं अयाजयिष्यत् ? पक्षे याजयेत् लिङपि विभाषा कथमि (III-3-143) इति (III-3-141).

## लृट्

**तिङ्** :- अभिज्ञावचने-स्मृति बोधकपदे वर्तमाने "अनद्यतने लङ्" (III-2-111)इत्यस्यापवादः । स्मरसि कृष्ण गोकुले वत्स्यामः = अवसामः इत्यर्थः । यत् शब्दयोगे न ।स्मरसि कृष्ण यत् वने अभुञ्ज्महि। विभाषा

साकाङ्क्षे–स्मरसि कृष्णा वने वत्स्यामः गाः चारयिष्यामः। पक्षे लङ्-अवसाम (III--2-112,113,114).

**तिङ्** :- शेषे लृडयदौ–यच्च यत्र(III-3-148) इत्यारभ्य "चित्रीकरणे" (III-3150) इत्यन्तं यदुक्तं तदन्यत्र चित्रीकरणं शेषः। ईदृशे शेषे उपपदे चित्रीकरणे गम्यमाने धातोः लृट्। आश्चर्यमेतत् यत् पङ्गुर्नाम पर्वतमारोक्ष्यति। (III-3-151).

**तिङ्** :- क्षिप्रवचने लृट्–उपाध्यायश्चेत् क्षिप्रमागमिष्यति वयं व्याकरण मध्यगीष्महि (III-3-133).

**तिङ्** :- स्यतासी लृलुटोः-भविष्यति (III-1-33).

**तिङ्** :- लृटः सद्वा (III-3-14) लृट् स्थाने सत्संज्ञौ शतृशानचौ वा स्तः करिष्यन्तं देवदत्तं पश्य, करिष्यमाणं पश्य। प्रथमासमानाधिकरणे तु विकल्पः करिष्यन् देवदत्तः, करिष्यमाणो देवदत्तः।

**तिङ्** :– अनवक्लृप्तिरसम्भावना, अमर्षो अक्षमा किंवृत्ते उपपदे अकिंवृत्ते उपपदे च।

नावकल्पयामि, न सम्भावयामि, न श्रद्धधे, तत्र भवान् नाम वृषलं याजयिष्यति भवान्नाम याजयेत्। क्रियातिपत्तौ लृङ्पि (III-3-145).

**तिङ्** :- किं किलास्त्यर्थेषु (III-3-146).

**तिङ्** .– कि वृत्ते लिङ् लृटौ (III-3-144,145).

**तिङ्** :- किं किलास्त्यर्थेषु (III-3-146).

# लेट्

(III-4-7).लिङर्थे लेट्

# लोट्

**तिङ्** :- लोट् च (III-3-162) विध्यादिषु (III-3-161) प्रतिपाद्यार्थेषु लोट्

लोट् तिङ् स्मे-(III-3-165).

इच्छार्थेषु (III-3-157).

क्रियासमाभिहारे (III-4-2).

समुच्चयेऽन्यतरस्याम् (III-4-3).

यथाविध्यनु (III-4-4).

समुच्चये (III-4-5).

# लोपः

संज्ञा शास्त्रतः कस्यचित् शब्दस्य वर्णस्य वा श्रवणप्रसङ्गे तस्यादर्शनं लोपः । तस्य लोपः (I-3-9) इति इत्संज्ञकस्य सर्वलोपः । नात्रालोन्त्यस्येति नियमः । चुटू (I-3-7).

# ल्यप्

कृत् :- समासेऽनञ्पूर्वे (VII-1-37.38).

# ल्युः

कृत् :- नन्दिग्रहिपचादिभ्यः (III-1-134).

# ल्युट्

कृत् :- कृत्यल्युटो बहुलम् (III-3-113 to117).

ल्युट् वासरूपोऽस्त्रियाम् (III-1-94) नास्ति । "स्त्रियां प्रतिषेधे क्त ल्युट्-तुमुन् खलर्थेषु विभाषा प्रसङ्ग"इति वार्तिकम् ।

# व

इत् :-

उच्चारणे विशेषः । व्योः लघुप्रयत्नतरः शाकटायनस्य । (VIII-3-18) लघुतरप्रयत्नकः असावादित्यः ।

**लोप**: :- 1) एकाल् प्रत्ययस्य व् इत्यस्य सदा लुक् । "वेरपृक्तस्य" भजो ण्विः (III-2-62) अंशभाक् । उत्सृष्टानुबन्धादयः सर्वे क्विबादयः प्रत्ययाः वेरित्यनेन गृह्यन्ते । अनुत्सृष्टा-स्त्वन्ये तेषु वलोपो न = जागृविः । अत्र जृस्तृजागृभ्यो विन् । जाग्रोऽविचि (VII-3-85) कारिका: विनुणादि (493) (VI-1-67).

2) लोपो व्यो र्वलि = दिव् धातोः दिदिवान्। जीव + अदानुक् जीरदानुः । (VI-1-66).

**तिङ्** :- लिट् परस्मैपदानां "णलतुसुस्थल (III-4-82) बभूविथ । विदो लटो वा (III.4-83) विद्व । पक्षे विद्वः ।

**लिङ्** :- स्फाय् इत्येतस्य अङ्गस्य वकारदेशः णौ । स्फावयति (VII-3-41)

**आदेशः** :- पचो वः पचधातोः निष्ठातस्य वः । पक्वः (VII-2-52).

**आदेशः** :- 1) मकारान्तात् मतो वः । किम् + मान् । किं वान् । शंवान् ।

2) मकारोपधात्-दाडिमीवान् । शमीवान्

3) अकारान्तात् । वृक्षवान्

4) अकारोपधात् = पयस्वान् (VIII-2-9).

5) झयन्तादुत्तरस्य मतो वः । इन्द्रो मरुत्वान्(VIII-2-10).

6) संज्ञायाम् + मुनिवती (VIII-2-11).

7) आसनशब्दस्य आसन्दीति निपातः । तस्मात् आसन्दीवान् ग्रामः । एवमन्ये निपातान्ताः (VIII-1-12to15)

"मञः परस्य उञः इति निपातस्य अचि परे वः भवति । किम् + उञ् = वा किमु + उक्तम् = किम्वुक्तं-किमु उक्तम् । शमु + अस्तु = शम्वस्तु· शमु अस्तु वेदिः । तदु + अस्य तद्वस्य परे तः । तदु अस्य । अत्र निपात एकाच् इति नित्यं प्रगृह्ये प्राप्ते वादेशो वा । (VIII-3-33).

**आदेशः** :- व प्रत्ययः । क्विन् क्विप् वि इत्यादीनां व प्रत्ययः इति

साधारणो निर्देशः । यदा अञ्चतिः वप्रत्ययान्तः तदा अनिगन्तो गतिः प्रकृतिस्वरः प्राङ् प्राञ्चौ । वप्रत्ययाभावे उदञ्चनः (VI-2-52).

**आदेशः** :- वप्रत्यये परतः अञ्चतेः "अद्रि" इत्यादेशः । विष्वक् शब्दात् = विष्वद्र्यङ् देव शब्दात् = देवद्र्यङ् (VI-3-92).

**उणादि** :- कृ गृ शृ दृभ्यो वः । कर्वः । कामः । आखुः । गर्वः । शर्वः । दर्वः राक्षसः (153).

**आदेशः** :-तयोः य्वौः अचि संहितायाम् (VIII-2-108) अग्ना 3 याशा । पटा 3 वुदकम्

**तद्धितः** :- मत्वर्थे केशात् वः वा । प्रशस्ताः केशाः अस्य केशवः । पक्षे मतुप् इनि ठञः । केशवान्, केशी, केशिकः केशवान् (V-2-109).

**तद्धितः** :- गाण्डी = गाण्डीवम् = अर्जुन धनुः, अजग + व = अजगवम् शिवधनुः (V-2-110).

# वति

**तद्धितः** :- तेन तुल्यं क्रिया चेत् । राज्ञा तुल्यं क्रिया राजवत् अनुशास्ति । इवार्थे वतिः (V-1-115).

**तद्धितः** :- सप्तमीसमर्थात् षष्ठीसमर्थात् च प्रातिपदिकात् इवार्थे लंडने इव = लंडन्वत् । रामस्येव रामवत् तवापि कार् (V-1-116).

**तद्धितः** :- तदर्हम् = राजानमर्हति राजवत्पालनम् (V-1-117) ब्राह्मणवत् विद्याप्रचारः

**तद्धितः** :- छ · स्वार्थे धात्वर्थे वर्तमानात् उपसर्गात् = उद्वतो निवतो यासि वप्सत् । अत्र उत् नि उपसर्गौ उद्वतः निवतः इत्यर्थवाचकौ (V-1-118).

# वतु

वतु प्रत्ययान्ताः संख्या संज्ञकाः "बहुगुणवतुडतिसंख्या" (1-1-23).

# वतुप्

**तद्धितः** :– यत् तत् एतत् एतेभ्यः परिमाणार्थे यावत् तावत् एतावत् यत् परिमाणमस्य = यावत् । तावत् । एतावत् । (V-2-39).

**आदेशः** :- मतुपः वतुप् आदेशः (VIII-2-9&10) किम् + मतुप् = किं + वतुप् = कियान् । उपधादीर्घः (VI-1-84).

**तद्धितः** :- वकारस्य घः आदेशः किम्, इदम् आभ्याम् । कियान् । इयान् (V-2-40).

# वन्

**स्त्रियाम्** :- वनो र च । धीवरी । पीवरी । शर्वरी (IV-1-7).

**उणादि** :– इण् शीभ्यां । एवो = गन्ता "एवा मरुतः" शेवं लाञ्छनम् 150

**उणादि** :- सर्वः शिवः शम्भुः इत्यादयः वन्नन्ता ।

**उणादि** :- लिहृन्त्यनया जिह्वा लस्य जः गुणाभावश्च । गिरन्त्यनया = ग्रीवाएवं अन्ये च (151,152).

**उणादि** :- शामेः वन् । शंवः -मुसलम् (534).

उणादि :- वनिपादीनां ग्रहणम् । तस्मिन् परे अनुनासिकान्तस्य आकारः । विजावा (VI-4-41).

# वनिप्

**कृत्** :- आकारान्तधातोः छ· सुपि उपपदे वनिप्

**कृत्** :- भूरिदावा, घृतपावा (III-2-74).

**कृत्** :- अनाकारान्तधातोरपि भाषायाम् । विजावा, अग्रेगावा (III-2-75).

**उणादि** :- स्नामदि–स्नावा = रसिकः महाशिवः-(552)

## वय

तद्धितः :- माने = विकार विशेषेऽर्थे द्रुशब्दात्। द्रुवयम् = फलविशेषः (IV-3-162).

सर्वनाम यूयवयौ-वयम्। अतिवयम् (VII-2-93).

## वरच्

कृत् :- स्था-ईश भास पिसृ (गतौ) कस (गतौ) एभ्यः तच्छीलादिषु कर्तृषु स्थावरः ईश्वरः भास्वरः पेस्वरः विकस्वरः (III-2-175).

कृत् या प्रापणे इत्यस्मात् यङन्तात् तच्छीलाद्यर्थे। यायावरः (III-2-176).

## वरट्

उणादि अश्नोतेराशुकर्मणि च अकारस्य ईत्वं = ईश्वरः (735).

## वल्

प्रत्याहारः :- आर्धधातुकस्येट् वलादेः (VII-2-35).

प्रत्याहारः :- लोपो व्योर्वलि (VI-1-66).

## वलच्

तद्धितः :- चातुरर्थिकः शिखावलम्, शिखा नाम कश्चित्। तेन निर्मितं नगरम् (IV-2-89).

मत्वर्थे। रजस्वला। कृषीवलः (V-2-112).

संज्ञायाम् दन्तावलः गजः सैन्यश्च। सिखावलं नगरम् (V-2-113)

निपातः :- ऊर्जस्वलः (V-2-114).

### वलञ्

उणादि :- शीङ् धातोः शैवलम् = कुमुद्वती (478).

## वलन्

उणादि :- शीङ् धातोः शेवालम् = जलनीली (478).

# वस्

तिङ् :- तिप्तस्झि = भवाव: (III-4-78).

# वसुः

**आदेशः** :- विदे: शतुर्वसु:। विद्वस् (VII-1-36). वसो: सम्प्रसारणम् (VI-4-131) वसुस्रंसु (VIII-2-72),

# वहिङ्

तिङ् :- आत्मनेपदि उत्तमबहुवचनम् (III-4-78).

# वहे

तिङ् :- टित आत्मनेपदानां टे रे। एधामहे (III-4-79).

# वा

संज्ञा :- नवेति विभाषा (I-2-44).

## वालञ्

**उणादि** :- चते: चात्वाल: (113)

# वि

**उणादि** :- दर्वि: इति निपातनात् दृणातेर्वि: इति व्युत्पत्त्या वि प्रत्ययोनमीयते 364

साधारणत: क्विन् च्वि ण्वि ण्विन् विच् विदां ग्रहणम्।

**कृत्** :- जागृोऽविचिण्णल् (VII-3-85).

# विक्

**आगमः** :- द्युते: यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभाव: अत्वं विक् आगमश्च निपात्यते। दविद्युतत् (VII-4-65).

# विच्

**कृत्** :– छ · उपे उपपदे यजेः = "उपयङ् भीरूर्ध्वं वहन्ति" भाषायां उपयज् (III-2-73) उपयट् ।

**कृत्** :– अकारान्तधातोः कीलालपाः । शुभयाः (III-2-74).

**कृत्** :– अनाकारान्तात् धातोरपि-रुष् + विच्-चकारः इत्, इकारः उच्चारणार्थः, वकारस्य अपृक्तत्वात् लोपः । गुणः, ष्टुत्वम् = रोड् । रिष् –हिंसायां = रेड् । सुगण् विड्वनोरनुनासिकस्यात् (VI-4-41) (III-2-75).

# विट्

**कृत्** :– उपसर्गे सुपि छ · जनादिधातुभ्यः· जन् ना अब्जाः । सन्–षण सम्भक्तौ, नृषाः इन्द्रः । खन् = कूपखाः । क्रम् = क्रः, = दधिक्रा । गम, अग्रेगाः । वेरपृक्तस्य (VI-1-67). विड्वनोरनुनासिकस्यात् (VI-2-41).

# विधल्

**तद्धितः**:- भौरिक्यादिः विषयो देशो यस्य इत्यर्थे भौरिकिविधः (IV-2-54).

# विन्

**उणादि** :- वृदृभ्यां वधिः घस्मरः दार्वि (493).

# विनि

**तद्धितः** :– तपश्शब्दात् मत्वर्थे तपस्वी (V-2-102).

**तद्धितः** :– ऊर्जस् शब्दात् मत्वर्थे ऊर्जस्वी (V-2-114).

**तद्धितः** –: असन्तशब्दात् माया, मेधा, स्रक् शब्देभ्यः मत्वर्थे ; यशस्वी, पयस्वी, मायावी, मेधावी, स्रग्वी (V-2-121).

**तद्धितः** :- छ- मत्वर्थे बहुलं विनिः (V-2-122).

# वु

साधारण्येन वुक् वुच् वुञ् वुन् इत्यादीनां ग्रहणं–युवोरनाकौ (VII-1-1).

## वुक्

**तद्धितः :–** आगमः भ्रूशब्दात् अपत्यार्थे ढक्। तत्सन्नियोगशिष्टः वुक्। भ्रौवेयः (IV-1-125).

**तिङ् :–** आगमः। भुवो वुग् लुङ् लिटोः। अभूत्। बभूव (VI-4-88).

**तिङ् :-** आगमः। सूतेः लिटि परस्मैपदं वुक् आगमः, अभ्यासस्यात्वं च निपात्यते छन्दसि। "ससूव स्थविरं विपश्चिताम्"। भाषायां सुषुवे (VII-4-74).

**तद्धितः :–** वर्णु नाम नदः तत्समीपवर्ती देशः वर्णुः। तत्र या कन्था जायते तत्प्रातिपदिकात् युकायां वाच्चायां वुक् = सायुका कान्थिका (IV-2-102).

## वुच्

**तद्धितः :–** उपशब्दः आदौ यस्य बह्वचः शब्दस्य सः उपेन्द्रदत्तः। तस्मात् वुच् स्यात् नीतौ अनुकम्पायां च गम्यमानायाम् उपेन्द्रदत्तः अनुकम्पित इत्यर्थे "उपक" इति ठाजादि (V-3-83) इति लेपे रूपम्। एवमडच् आदयः अन्येऽपि विकल्पेन (V-3-80).

### वुञ्

**तद्धितः :–** तस्य समूहः (IV-2-37) इत्यर्थे गोत्रोक्षादिभ्यः, गोत्र-शब्दस्य अपत्यं पौत्रप्रभृति इति पारिभाषिकोऽर्थः अपत्याधिकारे एव। अत्र समूहार्थे, तेन साधारणतः अनन्तरापत्यार्थेऽपि वुञ् भवति। गोत्र औपगवानां गोत्र-अपत्यमात्रम् औपगवकम्, कापटवकम्। उक्षाणां समूहः = औक्षकम्। औष्ट्रकम्। युवोरनाकौ (VII-1-1) इति अकादेशः। मानुष्यकम्। वृद्धानां समूहः वार्द्धकम् (वा) (IV-2-39).

**तद्धितः** :- केदाराणां समूहः कैदारकम् यञ् च (IV-2-40).

**तद्धितः :-** "विषयो देशे" (IV-2-52) इत्यर्थे राजन्यानां देशः राजन्यकः (IV-2-53).

**तद्धितः** :- तदधीते-क्रममधीते-क्रमकः। पदकः (IV-2-61).

**तद्धितः** :- चातुर्थिकः अरीहणादिभ्यः = अरीहणकः (IV-2-80).

**तद्धितः** :- शेषे (1) धन्व (मरु) शब्दोपधात्। पारे धन्वकः। ऐरावतकः। (2) योपधात् –सांकाश्यकः (IV-2-121).

**तद्धितः** :- देशवाचकात् वृद्धसंज्ञकात्-प्रस्थ-पुर-वहान्तात् वुञ्। मालाप्रस्थकः। नान्दीपुरकः। फाल्गुनीवहकः (IV-2-122).

**तद्धितः** :- प्राग्देशवाचिनः वृद्धसंज्ञकात् रोपधात् तथा ईकारान्ताच्च = पाटलिपुत्रकाः। ऐकचक्रकाः। काकन्दी–काकन्दकः (IV-2-123).

**तद्धितः** :- जनपदवाचिनः वृद्धसंज्ञकात्। आभिसारकः। जनपदावधि वाचिनः–औपुष्टकः (IV-2-124).

**तद्धितः** :- बहुवचनविषयात् प्रातिपदिकात्।

1. अवृद्धजनपदात्। अङ्ग - आङ्गकः। कलिङ्गः-कालिङ्गकः।
2. अवृद्धजनपदावधेः। अजमीढाः-आजमीढकः।
3. वृद्धजनपदात्। दार्वाः दार्वकः। जाम्बवाः जाम्बवकः।
4. वृद्धाज्जनपदावधेः कालञ्जराः कालञ्जरकः (IV-2-125).

**तद्धितः** :- "शेषे" देशवाचिनः वृद्धात् अवृद्धादपि।
दारुकच्छकः। वभ्रुजाग्नकः। ऐन्द्रवक्त्रकः। चाक्रगर्तकः (IV-2-126).
**तद्धितः** :- देशवाचि धूमादिभ्यः। धौमकः (IV-2-127).
**तद्धितः** :- कुत्सने –नागरकः। प्रावीण्ये- नागरकः (IV-2-128).

**तद्धितः** :- मनुष्ये वाच्ये अरण्यात्। आरण्यकः। गिरिचरो जनः। पथ्यकः मनुष्यकः (वा) (IV-2-129).

कुर्वादिभ्य: वा। कौरवकः। कौरव:। यौगन्धरक:। यौगन्धर: (IV-2-130).

तद्धित: :- कच्छादिभ्यश्च (IV-2-133) मनुष्ये वाच्ये। काच्छको मनुष्य:। सैन्धवक: सिन्धुदेशीयो मनुष्य:। मनुष्यस्थे मनुष्यजाते वाच्ये = काच्छकं तस्य हसितम्। सैन्धवकं तस्य जल्पितम् (IV-2-134).

एवं साल्वक: मनुष्य:। साल्वकं अस्य हसितम्। यदि साल्वशब्द: पदातिवाचक:, तदा वुञ् न। साल्व:, = पदाति: योद्धा (IV-2-135).

साल्वशब्दात् गवि वाच्ये यवाग्वौ च वाच्ये वुञ्। साल्वो गौ: साल्वकः। साल्वा यवागू: (IV-2-136).

तद्धित: :- जातार्थे शरदि भवा: शारदका: दर्भा दर्भसंज्ञा:
जातार्थे शारदकाः मुद्गा: संज्ञा: (IV-3-27).

तद्धित: :- "उप्ते" अर्थे आश्वयुज्यां पौर्णमास्यां उप्ता: आश्वयुजका: माषा: (IV-3-45).

ग्रीष्मे उप्तं ग्रैष्मकम्। ग्रैष्मं सस्यम्। वासन्तकम्। वासन्तम् (IV-3-46)

ग्रीष्मे देयं ऋणं = ग्रीष्मकं। (IV-3-49).

निपात: :- संवत्सरे देयं ऋणं सांवत्सरकम्–आग्रहायणकम्-पक्षे ठञ्। सांवत्सरिकम् (IV-3-50).

तद्धित: :- तत आगत इत्यर्थे (IV-3-74) विद्यासम्बन्धादागत: उपाध्यायादागतम् औपाध्यायकम्। योनिसम्बन्धात् मातामहकम् (IV-3-77).

तद्धित: :- गोत्राख्यात् प्रातिपदिकात् = ग्लुचुकायनि: भक्तिरस्य ग्लौचुकायनक: "भक्ति:" (IV-3-95) क्षत्रियाख्यात्–सहदेव: भक्तिरस्य = साहदेवक: (IV-3-99).

तद्धित: :- भक्ति: (IV-3-95) इत्यर्थे वङ्गा इति बहुवचनान्तात् वङ्गकः इति जनपद (IV-2-124,125) यथा भवति तथात्रापि आङ्गा क्षत्रिया: भक्तिरस्य अङ्गकः, वाङ्गक: (IV-3-100).

तद्धित: :- कृत इत्यर्थे कुलालेन कृतं = कौलालकम् (IV-3-118).

**तद्धितः** :- गोत्रवाचिभ्यः इदमित्यर्थे-ग्लौचुकायनकम् । औपगवकम् । चरणवाचिभ्यः, काठकं, कालापकम् (IV-3-126).

**तद्धितः** :- शाकलाद्वा--शाकलेन प्रोक्तमधीयत इति शाकलाः । अण् पक्षे वुञ् । शाकलकाः (IV-3-128).

**तद्धितः** :- विकारे अवयवे च-औष्ट्रकः (IV-3-157).

**तद्धितः** :- उमाया अवयवो विकारो वा औमकम् पक्षे औमम् । उर्णाया और्णकम्, और्णम् (IV-3-158).

**तद्धितः** :- भावे कर्मणि च यस्य शब्दस्य उपधा यकारः उपोत्तमश्च गुरुः तस्मात्, रमणीयस्य भावः कर्म वा = रमणीयकम् (V- 1-132).

**तद्धितः** :- शिष्योपाध्याययोः भावः कर्म वा शैष्योपाध्यायिका, गौपाल पाशुपालिका, कौमारकुशिकिका, मानोज्ञकम्, काल्याणकम् (V-1-133).

**तद्धितः** :- गोत्रचरण वाचकात् भावकर्मणोरर्थयोः ।

1. श्लाघायाम्-गार्गिकया श्लाघते-गर्गगोत्रे एव हेतोः ।
2. गार्गिकया अत्याकुरुते-गर्गत्वहेतोः निन्दां करोति ।
3. गार्गिकामवेतः गर्गत्वं प्राप्तः (V-1-134).

**कृत्** :- 1) तच्छीलादिष्वर्थेषु । निन्दकः । हिंसकः ।
2) देवि क्रुश धात्वोः सोपसर्गे । आदेवकः । आक्रोशकः । उपसर्गरहिते तु देवयिता-क्रोष्टा (III-2-146,147) अत्र ण्वुला सिद्धे (III-1-133) वुञ् विधिः ज्ञापयति वासरूपविधिर्नास्तीति ।

# वुन्

**कृत्** :- समभिहारे = साधुकारित्वेऽर्थे-प्रवकः । सरकः । लवकः (III-1-149).

**कृत्** :- आशिषि । जीवकः-जीवतात् (III-1-150).

**तद्धितः** :- तदधीते तद्वेद (IV-2-59) इत्यर्थे क्रमादिभ्यः । क्रमकः (IV-2-61)

तद्धितः :- तत्र जात इत्यर्थे (IV–3-25) पूर्वाह्णकः। आर्द्रकः। मूलकः (IV-3-28).

तद्धितः :- पथिजातः पन्थकः (IV–3-29).

तद्धितः :- अमावास्यायां जातः अमावास्यकः । पक्षे अ च (IV-3.31) अमावास्यः (IV-3-30).

तद्धितः :- देयं ऋणे (IV-2–47) इत्यर्थे कालनिर्णयः = यस्मिन् काले-मयूराः कलापिनो भवन्ति स कलापी तस्मिन् काले देयं ऋणं कालापकम् । एवमाश्वत्थकम्-अश्वत्थवृक्षाः यस्मिन् काले फलन्ति तस्मिन् देयमृणम् (IV-3-48).

तद्धितः :- "भक्ति" रित्यर्थे वासुदेवो भक्तिः यस्य वासुदेवकः। अर्जुनकः (IV–3-98).

तद्धितः :- वैरे द्वन्द्वात्: काकोलूकिका। दैवासुरम् । देवासुरद्वन्द्वे वैरे-वाच्ये वुन् न (वा)

मैथुने–कुत्सकुशिकिका (IV–3-125).

तद्धितः :- मत्वर्थे गोषद शब्दवान् अध्यायः गोषदकः। इषेत्वकः अनुवाकः (V–2–62).

तद्धितः :- तत्र कुशल इत्यर्थे। पथि कुशलः पथिकः (V–2-63).

तद्धितः :- "वीप्सायाम्" पादान्तस्य संख्यावाचकस्य । द्वौ द्वौ पादौ ददाति = द्विपदिकां ददाति । द्विशतिकां ददाति । वुन् सन्नियोग शिष्टः शत + वुन् इत्यत्र अकारलोपः। पादस्य पदादेशश्च। पादशताभ्यामेव–द्वौ द्वौ माषौ ददाति (V-4-1).

तद्धितः :- दण्डव्यवसर्गयोश्च (V–4-2) दमनं दण्डः। व्यवसर्गः दानं । अत्र वीप्सा नास्ति । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः । द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति । द्विशतिकां दण्डितः (V-4-2)

उणादि :- कृञादिभ्यः संज्ञायाम्-करकः करका। कटकः। नरकः। सरकः गगनम्। कोरकः 713

**उणादि** :- चीकयतेराद्यन्तविपर्ययश्च = कीचकः वंशभेदः (714)

**उणादि** :- पचि मच्योः उपधाया इच्च = पेचकः। मेचकः (712)

# व्यत्

**तद्धितः** :- अपत्यार्थे भ्रातृव्यः छः भ्रात्रीयः (IV-1-144).

# व्यन्

**तद्धितः** :- शत्रुः इत्यर्थे प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये। भ्रातृव्यः = शत्रुः सपत्नः (IV-1-145).

# श

**इत्** :- अनेकाल्शित्सर्वस्य (I-1-55).

तिङ्शित्सार्वधातुकम् (III-4-113).

लशक्वतद्धिते (I-3-8).

शे मुचादीनाम् (VII-1-59)-

शे तृम्फादीनां नुम् वाच्यः (वा)

**कृत्** :- पाधातोः अलुग्विकरणस्य पिबादेशः। शप्रत्ययस्य सार्वधातुकत्वात्। पिब + श, सार्वधातुकत्वादेव शप्। पिब + शप् + श। पिब + अ + अ = पररूपम् पिबः।

घ्राइत्यस्य जिघ्रादेशः। ध्मा इत्यस्य धमः। धेट् + शः शप् अयादेशः = धयः इति। दृश् "पा घ्रा" पश्यः। अत्र घ्रा धातोः संज्ञायाम् न शः व्याघ्रः इति निर्देशात् शे कृते व्याजिघ्र इति स्यात् (वा) (III-1-137).

**कृत्** :- लिम्प उपदाहे विद्लु लाभे तुदादी धातू ताभ्यां शः। शे मुचादीनां इति नुम्। लिम्पः। विन्दः इत्यादि (III-1-138) नौ लिम्पेर्वाच्यः (वा) (III-1-138). अरविन्दम्। निलिम्पा देवाः। गवादिषु विन्देः संज्ञायाम्। गोविन्दः।

**कृत्** :- दा + शः। सार्वधातुकत्वात् ददः। एवं दधः (III-1-139) अनुपसर्गादेव–प्रदः, प्रधः।

**कृत्** :- करोतेः भावे शः । शित्वात् सार्वधातुके यक् भावे (III-1-67) शब भावश्च । कृ + श इति स्थिते "रिङ् शय" (VII-4-28) इति शे यकि, यादावार्धधातुके लिङि च ऋतो रिङ् स्त्री लिङ्गता च । क् + रि + य + अ = क्रिया । पक्षे क्यष् कृत्या । क्तिन् च कृतिः । एवं त्रैरूप्यम् (III-3-100).

**कृत्** : इष धातोः भावे शः, यगभावश्च निपात्यते । स्त्रीलिङ्गता । इच्छा (III-3-101) अत्र (वा)

1). परिचर्या-परिपूर्वक चरेः भावे शः यक् सार्वधातुकम्

2. परिसर्या । परिपूर्वक सृ धातोः भावे शः यक् पूजा सार्वधातुकशस्य पित्वात् ङित्वम् । तेन गुणनिषेधे प्राप्ते गुणो निपातनात् ।

3. मृगया । मृगश्चुरादिरदन्तः । अतो लोपो न । शे यकि, णिलोपः ।

4. अटाट्या । अटतेः शे यकि ट्य इत्यस्य द्वित्वम् । आद्ययकार-निवृत्तिः दीर्घश्च ।

5. जागर्या । यक् । शः । पक्षे अः । जागरा (वा) (III-1-101) विकरणम् । तुदादिधातुगणस्य गुणनिषेधः । तुदति (III-1-77).

**तद्धितः** :– मत्वर्थे । लोमशः लोमवान् । अत्र तद्धितत्वात् "लशक्व" इति शलोपो न। लोमादिपामादिपिच्छादिभ्यः(V-2-100).

**समासः** :– ऋचः शे (VI-3-55) पादशब्दस्य पदादेशः शे परे ऋचश्चेत् गायत्रीं पद्शः पच्छः शंसति । वीप्सा । ऋचोऽन्यत्र पादशः कार्षापणं ददाति ।

# शक्

**उणादि** :- वृ धातोः । वृशः आर्द्रकम् (544).

**उणादि** :- भृ धातोः । भृशं (545)

# शंकटच्

**तद्धितः** :– स्वार्थे क्रियाविशिष्टसाधनवाचकात् । विशङ्कटम् । शालजपि (V-2-28).

# शत्

**तद्धितः** :- त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । रूढशब्दाः (V-1-59)

# शति

**तद्धितः** :- विंशतिः (V-1-59).

# शतृ

**कृत्** :- शकारः सार्वधातुकद्योतकः वर्तमानकालः ऋदित्वं उगिदचामिति (VII-1-70)नुमागमद्योतकः ।
अधि + ईङ् + शप् शतृ = अधि + इङ् + अ + न् + त् पररूपमेकादशः । अधीयन् । संयोगान्तलोपः । अचिश्नु (VI-4-77) इति इयङ् । धरि + णिच् हेतु (III-1-26) धारयन् (III-2-130).

**कृत्** :- "अमित्रे"द्विष धातोः । द्विष् + अन् । द्विष् + अ + न् + त् = द्विषद् (III-2-131).

**कृत्** :- "यज्ञसंयोगे" यज्ञ स्वामिनि अर्थे । षुञ्-अभिषवे इति धातोः । षु + शतृ । धात्वादेः षः सः । षु + शतृ + अंत् = सुनु + अ + न् + त् = सुन्वन्(III-2-132).

**कृत्** :- "प्रशंसायाम्"अर्हधातोः । अर्हन् (III-2-133).

**आदेशः** :- 1. वर्तमाने लटः शतृशानचौ (III-2-124).

2. संबोधने च (III-2-125) हे पचन्

3. क्रियायाः परिचायके (III-2-126) यवनः तिष्ठन् मूत्रयते ।

4. शतृ प्रत्ययस्य सत् संज्ञा । तस्य फलं लृटः सद्वा(III-3-14) करिष्यन्तं पश्य । तेन तिङः निवृत्तिः (III-2-127) विदेः शतुर्वसुः । विद धातुरत्र ज्ञानार्थकः । लुग्विकरण एव । शतुः वस्वादेशः । विद्वान्-विदुषी (VII-1-36).

शतृ प्रत्यये विशेषाः शानच् प्रत्ययस्यापि

1. शित्वात् सार्वधातुकत्वम् । शब् विकरणः
2. लादेशत्वात् कर्तरि कर्मणि भावे च ।
3. ऋदित्वात् नुमागमः । उगिदचां (VII-1-70).
4. शतुरनुमो नद्यजादी (VI-1-173).
5. षष्ठीसमासप्रतिषेधः लादेशत्वात् । न लोका (II-3-69).
6. स्वरितो वाऽनुदत्ते (VIII-2-6) वा

# शध्यै, शध्यैन्

कृत् :- तुमर्थे (III-4-9).

# शप्

विकरणम् । कर्तृवाचिनि सार्वधातुके परतः धातोः शप् । पकारः स्वरार्थः अकारः सार्वधातुकार्थः । पचति । भवति । (III-1-68).

शपो लुक् । अदिप्रभृतिभ्यः (II-4-72;73) अत्ति । द्वेष्टि ।

शपः श्लुः जुहोत्यादिभ्यः। अत्रापि शपो लोपः । द्विवचनार्थं श्लुविधानम् बिभेति (II-4-75).

# शर्

प्रत्याहारः :- नुम् विसर्जनीय (VIII-3-58).

# शल्

प्रत्याहारः :- शल इगुपधादनिटः क्सः (III-1-45).

# शस्

सुप् :- स्वौजसमौट् (IV-1-2).

तद्धितः :- बहुशो ददाति (IV-4-42,43).

# शा

आदेशः :- शास् इत्यस्य शा हौ (VI-4-35).

# शाकट्, शाकिन्

तद्धितः :- क्षेत्रे इक्षुशाकटम् (V-2-29) इक्षुशाकिनम् ।

# शानच्

आदेशः :- हलन्तधातोः परस्य श्ना इत्यस्य स्थाने हौ परतः । मुष् + श्ना + सिप् + लोट् = मुष् + श्ना + हिः । सेर्ह्यपिच्च (III-4-87) मुष् + शानच् + हि । मुषाण + हि । अतो हेः (VI-4-105) मुषाण (III-1-83).

आदेशः :- लटः शतृशानचौ (III-2-124).

1. पचमानं पश्य
2. संबोधने च । हे पचमान (III-2-125).
3. लक्षणे शयाना भुञ्जते यवनाः । हेतौ अधीयानो वसति (III-2-126)
4. शानचः सत् संज्ञा (III-2-127) ब्राह्मणस्य कुर्वाणः

# शानन्

कृत् :- पूङ् धातोः, यज् धातोः शानन् । पूङ् + शप् + शानन् । शित्वात् सार्वधातुकत्वम् । पव् + अ + आन = अतः परत्वात् मुक् (VII-2-82) पवमानः एवं यजमानः (III-2-128) शानन् वर्तमानकालबोधकोऽपि न लादेशभूतः कर्तर्येवार्थं न भावकर्मणोरपि । तेन शतृशानज्भ्यामस्य भेदः । सोमं पवमान इत्यत्र "न लोके"ति (II-3-69) षष्ठी समासेन तृन्प्रत्याहारान्तर्गतत्वात् ।

तृन् प्रत्याहारान्तर्गताः प्रत्ययाः-

1. शानन् । पूङ् (III-2-128).
2. चानश् । ताच्छील्य (III-2-129).
3. शतृ इङ् धार्योः (III-2-130, 131, 132, 133).
4. आक्वेः । तच्छीलाद्यर्थेषु तृन् (III-2-135).

# शायच्

**कृत्** :- हलः श्नः शानज्झौ (III-1-83) छन्दसि शायजपि (III-1-84) व्यत्ययो बहुलम् (III-1-85).

# शालच्

**कृत्** :- "वि" उपसर्गात् शालच् । विशालम् । धातोरभावात् धात्वर्थे उपसर्गे अन्तर्भूतः शङ्कटमपि (V-2-28).

# शि

शौ परतः दीर्घः । इन्हन्पूषार्यम्णां (VI-4-12) बहुदंडीनि

बहुवृत्रहाणि । बहुवर्यमाणि ।

**संज्ञा**:- सर्वनामस्थानम् जस्शसोः शिः । (VII-1-20) नपुंसकादङ्गात् जस्शसोः आदेशौ वनानि प्र॰ ब । वनानि द्वि.ब । शिलोपः छ॰ (VI-1-70)

# शी

**सुप्** :- जसः शी (VII-1-17)

**सुप्** :- औङ आपः (VII-1-18)

**सुप्** :- नपुंसकाच्च VII-1-19)

# शुन्

**उणादि** :- स्पृशेः श्वण् शुनौ पृच । पर्शुः । आयुधम् (705)

# शे

**सुप्** :- सुपां सुलुक् (VII-1-39) अस्मे इन्द्राबृहस्पती । युष्मास्वस्मभ्यमिति प्राप्ते शे ।

शे इत्यस्य प्रगृह्यसंज्ञा । अम्मे इन्द्राबृहस्पती (I 1–13)

### श्तिप्

धातोः निर्देशः श्तिपा भवति पठतिना । पठधातुर्निर्दिश्यते । एव मिकं इत्यनेनापि (वा) रोगाख्यायां (III–3–108) सूत्रे

## श्नु

श्न इति एकादेशेन श्नम् इत्यस्य ग्रहणम् । श्नसोरल्लोपः (VI–4–111).

## श्नम्

**विकरणम्** :- रुधादिभ्यः श्नम् । रुणद्धि । शपोऽपवादः (III-1–78)

## श्ना

**विकरणम्** :– क्र्यादिभ्यः । क्रीणाति (III-1–81).

### श्नुः

1. **स्वादिभ्यः** श्नुः । सुनोति (III-1–73).
2. स्तम्भुस्तुन् (III–1-82),

### श्यन्

दिवादिभ्यः श्यन् । दिव् + श्यन् । दिव् + य + ति । हलि च (VIII-2-77)

1 दीर्घः । दीव्यति (III–1–69).

2. वा भ्राश भ्लाश (III-1–70).

3. यसोऽनुपसर्गात् (III-1-71).

4. संयसश्च (III–1–72).

## श्रः

**आदेशः** :- प्रशस्यस्य श्रेयान्-श्रेष्ठः (V-3–60).

## श्लुः

**संज्ञा** :- प्रत्ययस्य लुक् श्लु लुपः (I-1-61) इति त्रयः प्रत्ययलोपप्रकारा विहिताः । (पश्य लुक्) तत्र श्लु संज्ञाभावितप्रत्ययलोपः । जुहोत्यादिभ्यः श्लुः (II-4-75) हु + शप् + ति अत्र प्राप्तस्य शपो लुक् । अभ्यासः । जुहोति ।

## श्वण्

**उणादिः** :- स्पृशेः श्वण् पृच । पार्श्वम् (705).

# ष

इत् :- 1) षित्गौरादिभ्यः (IV-1-41) ङीष्

2) षः प्रत्ययस्य (I-3-6).

3) शिल्पिन् ष्वुन् (III-1-145) नर्तकी

4) (VI-1-64) धात्वादेः षः सः

5) षिद्भिदादिभ्यः अङ् (III-3-104).

धात्वादेः षः सः (VI-1-64).

1) सुप् धातुं 2) ष्ठिव धातुं 3) ष्वष्क धातुं 4) नाम धातुञ्च वर्जयित्वा (वा)

समासान्तः प्रत्ययः द्वित्रिभ्यां परो यो मूर्धन् तदन्तात् बहुव्रीहिः । द्विमूर्धन् टिलोपः (VI-4-144) द्विमूर्धः । एवं त्रिमूर्धः (V-4-115).

**आदेशः** :- व्रश्चादीनां षः झलि पदान्ते च । व्रष्टा । व्रष्टुम् । व्रष्टव्यम् यज = यष्टा । यष्टुं । यष्टव्यम् । छकारान्तानां प्रष्टा । प्रष्टुम् । प्रष्टव्यम् । शकारान्तानां लिश्-लेष्टा । लेष्टुम् । लेष्टव्यम् (VIII-2-36).

**नियमः** :- स्तौतिण्योरेवषण्यभ्यासात् (VIII-3-61).

**आदेशः** :- विसर्जनीयस्य षकारादेशः

1. इण उत्तरस्य विसर्जनीयस्य षः अपदाद्योः कुप्वोः परयोः । यजुष्पाशम् । सर्पिष्पाशम् (VIII-3-39).

2. इदुदुपधस्य चाप्रत्ययस्य । निस् निष्कृतम् । निष्पीतम् । दुष्कृतम् (VIII-3-41).
3. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे । द्विष्करोति । द्विः करोति । कृत्वोर्थाभावे नित्यं षकारः चतुष्कपालं । चतुष्कुण्डम् (V-3-43).
4- इसुसोर्विसर्जनीयस्यान्यतरस्यां षः । सर्पिष्करोति । सर्पिः करोति । (VIII-3-44).
5. नित्यं समासेऽनुत्तरपदस्थस्य । सर्पिष्कुण्डिका । धनुष्कपालम् ।

# षड्गवच्

तद्धितः :- षड्त्वे षड्गवच् (वा)अश्वषड्गवम् । सम्प्रोदश्च कटच् (V-2-29).

# षवन्

उणादि :- पृथवी-(148)

कृत् :- जल्पाकः । भिक्षाकः । कुट्टाकः, । लुण्टाकः । वराकः । षित्वात् वराकी (III–2-155).

# षिकन्

तद्धितः :- "तदधीते तद्वेद" इत्यर्थे शतषष्टेः षिकन् बहुलम् (वा) क्रतूक्थादि (IV-2-60) शतपथिकः, शतपथिकी । षष्टिपथिका- पथिकी बहुलग्रहणात् अण् । शातपथः, षाटिपथः ।

# षिवन्

उणादि :- पृथवी–पृथिवी-पृथ्वी-148.

# षुक्

कृत् :- तृन् (III-2-135) सूत्रे नयतेः षुक् च (वा) नेष्टा । त्विषेः (वा) त्वष्टा । क्षत्ता ।

**आगमः** :- मनुशब्दात् जातौ अञ् यत्। तत्सन्नियोगेन षुक्। मानुषः। मनुष्यः। जातिरत्र समुदायः। अपत्यार्थे न। अपत्ये अण्। मानवी प्रजा। (IV-1-161).

**तद्धितः** :- तस्य विकारः (IV-3-134) इत्यर्थे त्रपु जतुनोः। त्रापुषम् जातुषम् (IV-3-138).

**तद्धितः** :- आगमः। संज्ञायाम् धेनुष्या (IV-4-89) दुग्धादिद्वारा ऋणापनयनाय या धेनुः उत्तमर्णाय दीयते सा धेनुष्या (IV-4-36).

**तिङ्** :- भियो हेतुभये णि परतः। भीषयते (VII-3-40).

## षेण्यण्

**तद्धितः** :- "तस्येदम्" (IV-3-120) सूत्रे "समिधामाधाने षेण्यण्"। सामिधेन्यो मन्त्रः।

## ष्ठकन्

**तद्धितः** :- "गच्छति"अर्थे पथिन् प्रातिपदिकात्। पथिकः। पथिकी (V-1-75).

## ष्ठच्

**तद्धितः** :- प्रयच्छति गर्ह्यमित्यर्थे कुसीदिकः (IV-4-31)

## ष्ठन्

**तद्धितः** :- तस्य व्याख्यानमित्यर्थे-पौरोडाशिकम् (IV-3-70).

**तद्धितः** :- "हरति" इत्यर्थे भस्त्रया हरति भस्त्रिकः (IV-4-16).

"विवधेन हरति विवधिकः। पक्षे ठक् वैवधिकः। ठकि किति चेति (VII-2-118) वृद्धिः। ठस्येकः इत्युभयत्र (IV-4-17).

**तद्धितः** :- "प्रयच्छति गर्ह्यम्"कुसीदार्थं धनं प्रयच्छति कुसीदिकः

दशैकादशिकः। दश दत्वा एकादशाहरति (IV-4-31).

तद्धितः :- तत्र भव इत्यर्थे पुरोडाशः पिष्टपिण्डः। तत्संस्कारको मन्त्रः पौरोडाशः। पौरोडाशे भवः पौरोडाशिकः (IV-3-70) तद्व्याख्यान इत्यर्थे पौरोडाशिकः (IV-3.70).

तद्धितः :- "चरति" इत्यर्थे पर्पेण चरति पर्पिकः। अश्विकः (IV-4-10). "चरति" श्वगणिकः। श्वगणिकी। ठञ् पक्षे श्वागणिकः। श्वागणिकी अत्र वृद्धिः। ङीप्। श्वगणिकीत्यत्र न वृद्धिः, न ङीप्। किन्तु ङीष् (IV-4-11)-

तद्धितः :- अस्य पण्यमित्यर्थे किशराः सुगन्धिद्रव्याणि पण्यमस्य किशरिकः। नरदिकः (IV-4-53) शलालुः सुगन्धिद्रव्यशब्दात् अस्य-पण्य-मित्यर्थे शलालुकः शलालुकी—पक्षे ठक्। शालालुकः। अत्र ठस्य इकः न। किन्तु इस्-उस्-उक्। कतन्तात् कः एव (VII-3-51) एवं शालालुकः (IV-4-54).

## ष्ठरच्

तद्धितः :- अल्पार्थे कासूतरी (V-3-90).

## ष्ठल्

तद्धितः :- "चरति" इत्यर्थे आकर्षः निकषाश्मा। आकर्षिकः आकर्षं गिरा त्वा स्वर्णादिक्रेता चरति (IV-4-9).

तद्धितः :- "वसति" इत्यर्थे आवसथिकः (IV-4-74).

## ष्ट्रन्

कृत् :- धेट् पाने इत्यस्मात् कर्मणि ष्ट्रन्। षित्वात् ङीप्। ष्टुत्वेन प्राप्तस्य तकारत्वं त्र इति धेट् इत्यस्य धा इति रूपम्। आदेच उपदेश (VI-1-45). धा+त्र इत्यस्य यस्येति च (VI-4-148) इति अलोपः। धात्र् +ई धात्री पाययित्री (III-2-181),

कृत् :- दाम् नी शस् प्रभृति धातुभ्यः करणे दान्त्यनेनेति दात्रम्।

नयन्त्यनेन प्राप्नुवन्ति इति नेत्रम् । शस्त्रम् इत्यादि (III-2-182).

कृत् :- पूङ् पूञ् धात्वोः हलस्य सूकरस्य वा करणे अवयवे वाच्ये ष्ट्रन् भवति । हलस्य पोत्रम् अग्रभागः । सूकरस्य पोत्रम् अग्रभागः मुखम् (III-2-183)

त्र :- तितुत्रतथ (VII-2-9) इत्यत्र ये दश कृत् प्रत्ययाः, तेषु "त्र" इत्यनेन ष्ट्रन् तस्मिन् परे इडागमो न ।

## ष्फः

तद्धितः :- गार्गादिभ्यः ञ्यः गोत्रापत्ये भवति । गर्गस्य गोत्रापत्यं गार्ग्य इति (IV-1-105) । ईदृशयञन्तात् प्रातिपदिकात् ष्फः । षित् फलं स्त्रियां ङीष् । षित् गौरादिभ्यश्च (IV-1-41) फः आयने (VI-1-2)गार्ग्यायणी यञन्तात् स्त्रियां ष्फ एवेति प्राचां मतम् । अन्येषां मते तु यञन्तात् स्त्रियां ङीप् इति । गार्गी । वात्सी इत्यादि । यञश्च (IV-1-16) इति (IV-1-17).

तद्धितः :– लोहितादि कतन्तेभ्यः शब्देभ्यः यञन्तेभ्यः ष्फः नित्यं लोहित्यायनी । कात्यायनी (IV-1-18).

तद्धितः :- कुर्वादिभ्यः ण्यः (IV–1-151) इति ण्यन्तात् ष्फः । कौरव्यायणी । एवं ढक् च मण्डूकात् (IV-1–119) इति मण्डूक शब्दात् अणि कृते माण्डूक इति प्रातिपदिकात् ष्फः । माण्डूकायनी (IV-1-19).

## ष्फक्

तद्धितः :- कापिश्यां जातादि कापिश्यायनं । कापिश्यायनी द्राक्षा (IV–2-99).

### ष्यङ्

तद्धितः :- आदेशः । अणन्तशब्दात् इञन्त शब्दात् आर्षवाचक भिन्नात् गुरुभूतादुपोत्तमवर्णात् तस्यापत्यमित्यर्थे ष्यङ् आदेशः । कुमुदस्येव गन्धोऽस्य कुमुदगन्धि । अत्र उपोत्तमवर्णः "गं"गुरुभूतः । तस्यापत्यम् इत्यण् । वाराह्या (IV-1-78).

**तद्धितः** :- आदेशः। गोत्रावयवात्। गोत्राभिमताः कुलाख्याः पुणिक भुणिक मुखराद्याः तेभ्यो विहितयोः अणिञोः स्त्रियां ष्यङ्। अत्रोपोत्तमस्य गुरुत्वं नापेक्षितम्। पौणिक्या। मौखर्या (IV-1-79).

**तद्धितः** :- प्रत्ययः क्रौडि इत्येवमादिभ्यः स्त्रियां ष्यङ्। क्रौड्या। लाड्या अणिञन्ताः अगुरूपोत्तमाः (IV-1-80).

**तद्धितः** :— दैवयज्ञि प्रभृतिभ्यः वा ष्यङ्। दैवयज्ञी-दैवयज्ञः (IV-1-81).

## ष्यञ्

**तद्धितः** :- वर्णदृढादिभ्यः। शौक्ल्यम्। दार्ढ्यम्। पक्षे इमनिच्। शुक्लिमा। द्रढिमा (V-1-123),

**तद्धितः** :—गुणवचनब्राह्मणादिभ्यः कर्मणि। कविकर्म काव्यम्। ब्राह्मणकर्म ब्राह्मण्यम् (V-1-124).

**तद्धितः** :- स्वार्थे चातुर्वर्ण्यम् (वा)(V-1-124)।

# ष्वरच्

**उणादि** :- 1. कृ गृ = कर्बरोव्याघ्ररक्षसोः (279).

2. नौ सदेः। निषद्वरी रात्रिः(280).

3. छित्वर छत्वरादयः ष्वरजन्तनिपाताः (281).

# ष्वुन्

**कृत्** :- शिल्पिनि-खनकः। युवोरनाकौ(VII-1-1,III-1-145).

# स

**इत्** :- सिति च (I-4-16) सिति प्रत्यये परतः पूर्वं पदसंज्ञं, न भ संज्ञं। उर्णायुः। ऋत्वियः

**आदेशः** :- तदोः सस्सावनन्त्ययोः (VII-2-106).

**आदेशः** :- सर्वैकान्य (V-3-15) इति सर्वशब्दात् दा दकारपूर्व-प्रत्यये परतः । सर्वस्य स आदेशः । सदा (V-3-6).

**आदेशः** :- प्रशंसायाम् मृतशब्दात् । मृत्सा । सस्नौ प्रत्ययौ भवतः (V-4-40).

**उणादि** :- 1. वृ तृ वर्सम् । तर्सम् । वत्सः हंसः (342).

2. प्लुषेरच्चोपधायाः । प्लक्षः(343)

3. मनेः दीर्घः । मासम् (344) अशेर्देवने । अक्षः (345)

**तद्धितः** :- चातुरार्थिकः । तृणादिभ्यः सः । तृणसः । नडसः (IV-2-80).

**समासः** :-1. सहस्य "सः"इत्यादेशः संज्ञायां अश्वत्थं सपलाशम् (VI 3-78)

2. ग्रन्थान्ताधिके च । संसङ्ग्रहं व्याकरणम् । सद्रोणा खारी (VI-3-79).

3. द्वितीये चानुपाख्ये । सपिशाचा वात्या (VI-3-80).

4. अव्ययीभावे चाकाले । स चक्रम् । काले तु सहपूर्वाह्णम् (VI-3-81).

5. वोपसर्जनस्य । सपुत्रः । सहपुत्रः (VI-3-82).

**समासः** :- समानशब्दस्य स इत्यादेशः-

1. छ· मूर्धन् प्रभृति उदर्क शब्दात् वर्जयित्वा। अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । योगत्रिभगेन-सपक्षः । (VI-3-84).

2. ज्योतिर्जनपदादिषूत्तरपदेषु । समाना ज्योतिः सज्योतिः सस्थानः । सवर्णः । सवयाः (VI-3-85).

3. चरणे ब्रह्मचारिणि । सब्रह्मचारी (VI-3-86).

4. समानतीर्थे वासी (IV-4-107) इति यत्प्रत्ययः । तीर्थे ये । यत्प्रत्यये परे समानस्य स आदेशः । सतीर्थ्यः (VI-3-87).

5. उदरशब्दे उत्तरपदे वा। सोदर्यः। समानोदर्यः (VI-3-88).

6. दृक् दृश् वतुषु–सदृक्-सदृशः। कञ्क्विनावपि (VI-3-89).

# सक्

तिङ् :– आगमः। यमादीनां लुङि सिचि सक् सिचःइट् च। यम्-अयंसीत् व्यरं- सीत्। अनंसिषुः। आदन्तानां–अयासीत्। परस्मैपदेष्वेव (VII-2-73).

# सकृत्

तद्धितः :- आदेशः। एकशब्दस्य सकृत् इत्यादेशः क्रियाभ्यावृत्तिगणने। सकृत् भुंक्ते (V-4-19).

# सत्

कृत् संज्ञा। शतृशानचौ सत्संज्ञकौ (III-2-127).

कृत् :- लृटः सत् वा। करिष्यन्तं करिष्यमाणं पश्य (III-3-14)

# सधीनर्

(अधीन) तस्मात्तदत्रेदमिति सधीनर् (वा) अषडक्षेति (V-4-7) सूत्रे राजान इदं राजाधीनम्। (पश्य) स्वप्रत्ययः

## सध्रि

सुप् :- सहस्य सध्रिरादेशः अप्रत्ययान्ते अञ्चतौ परे। सध्र्यङ् (VI-3-95) सध मादस्थयोश्छन्दसि (VI-3-96).

# सन्

तिङ् इच्छार्थे धातोः कर्मणः समानकर्तृकात्। कर्तुमिच्छति चिकीर्षति (III-1-7).

विशेषार्थेषु "गुप्तिज्किद्भ्यः सन्" (III-1-5).

विशेषार्थेषु मान् बध दान् (III-1-6).

आशङ्कायाम् = कूलं पिपतिषति मन्ये (वा)

संज्ञा सन्नन्तस्याऽपि धातोः धातुत्वमेव। सनाद्यन्ता धातवः (III-1-32).

सनि परे अभ्यासः। सन् यङोः (VI-1-9).

# समसण्

तद्धितः- इदमः ऐषमः। इदमः इश् समसण्। प्रत्ययश्च संवत्सरे (वा) सद्यः। परुत् (V-3-22).

# समासान्तः

समासान्ताः प्रत्ययाः (V-4-68).

1. समासान्तप्रत्ययनिषेधः (V-4-69-72).
2. डच् = उपदशाः बहुव्रीहेः (V-4-73).
3. अ बह्वृचः। ऋक्पू (V-4-74).
4. अच्। प्रतिसामम्। अच् (V-4-75-90).
5. टच्। महाराजः। राजाहः सखिभ्यष्टच् (V-4-91-112).
6. षच्। दीर्घसक्थः। बहुव्रीहौ(V-4-113,114).
7. षः। द्विमूर्धः। द्वित्रिभ्याम् (V-4-115).
8. अप्। स्त्री प्रमाणः। अप् (V-4-116,117).
9. अच्। द्रुणसः। अच् (V-4-118-121).
10. असिच्। सुप्रजाः। नित्यमसिच् (V-4-122-123).
11. अनिच्। प्रियधर्मा। धर्मादनिच् (V-4-124-126).
12. इच्। दण्डादण्डि। इच् कर्मव्यतिहारे (V-4-127-128).
13. कप्—व्यूढोरस्कः "उरः प्रभृतिभ्यः कप् (V-1-121-160).

# समि

समासान्ता निपाताः :- संज्ञुःप्रसंभ्यां (V-4-129-150).

**आदेश:** :- अप्रत्ययान्ते अञ्चतौ परे समः समिरादेशः। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। समीचः। समीचा (VI-3-93).

# सरः

**उणादि** :- अशे = अक्षरम्-(350) असेः वत्सरः (351) सपूर्वात् चित् संवत्सरः- (352) कधूमाधिभ्यः कित् + कुसरः (353) पतेरश्चलः पत्सलः (354)

**कृत्** :- तितु त्रत (VII-2-9) सरत्। अशेः अक्षरम्

# सरन्

**उणादि** :- पश्य क्सरन्

# साढा

**छ.** :—सहेः क्त्वाप्रत्यये ओत्वाभावः क्त्वाप्रत्ययस्य

# साढ्यै

**छ.** :— ढ्यै भावः साढ्वा शत्रून्। साढ्यै समन्तात्

# साढ्वा

**छ.** :- साढा इति तृच् रूपम् (VI-3-113)

# साति

**तद्धितः** :- "साकल्ये"च्वि विषये सातिः वा स्यात् कात्स्न्र्ये (V-4-52).

**तद्धितः** :- अभिविधौ सम्पदा च अग्निसात् सम्पद्यते कृभ्वस्तिभिः अग्नीभवति। कात्स्न्र्यम् = एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः। अभिविधिः = बहूनां व्यक्तीनां किञ्चिदवयवावच्छेदेनान्यथाभावः। (V-4-53).

• **तद्धितः** :— तदधीनवचने कृभ्वस्तिभिः सम्पदा च योगे। राजसात् सम्पद्यते (V-4-54).

तद्धितः :- देये त्रा च विप्रत्रा सम्पद्यते विप्रसात् करोति (V-4-55).

## साध

तद्धितः :- बाढ इत्यस्य साधिष्ठः = साधीयान् (V-3-63)

## साम

तद्धितः :- सर्वनाम साम आकं स्यात् । युष्माकम् । अस्माकम् । ससुड्कस्य साम (VII-1-33.)

## सि

सिप् :- तिप् तस् (III-4-78) भवसि

कृत् :- तितुत्रत(VII-2-9) सि = क्सि: = कुक्षिः । पश्य क्सिः इडागम निषेधः ।

## सिकन्

उणादिः :- हनि शाल् हसिका-मक्षिका (593).

## सिच्

तिङ् :- च्लेः सिच् लुङि । आद्राक्षीत् (III-1-43;44).

तिङ् :- सिचि वृद्धिः परस्मैपदेषु (VII-2-1,2,3).

## सित्

सकार इत् प्रत्ययः सिति परे पूर्वं पदसंज्ञं भवति (I-4-16).

## सिप्

तिङ् :- तिप् तस्झि (III-4-78) भवति

तिङ् :- लेट् छ. (III-1-34).

## सीयुट्

तिङ् :– लिङः सीयुट् आत्मनेपदि (III-4-102).

## सु

सुप् :– स्वौजस् (IV-1-2) रामः

कृत् :- तितुत्र त (VII-2-9) नेट्। इक्षुः।

## सुक्

तिङ् :- सर्वप्रातिपदिकानां क्यचि लालसायां सुक् असुक् च (वा) अश्व क्षीर वृष (VII-1-51).

## सुच्

तद्धितः :- "संख्यायाः क्रियाभ्यावृत्तिगणने "द्वित्रि चतुर्भ्यः सुच्। द्विः करोति । त्रिः जुहोति । (V-4-18).

## सुट्

प्रत्याहारः :– सुडनपुंसकस्य (I-1-43).

आगमः :- आमि सर्वनाम्नः (VII-1-52).

आगमः :- सुट् तिथोः। कृषीष्ट (III-4-107).

आगमः :- सुट् कात् पूर्वः (VI-1-135,157).

## सुप्

सुप् :- सुप् प्रत्याहारः। स्वौजस्-सुप् (IV-1-2)सर्वे विभक्तिप्रत्ययाः

सुप् :– विभक्तिप्रत्ययेषु सप्तमी बहुवचनम् । रामेषु (IV-1-2).

लुक् 1. अव्ययादाप्सुपः (II-4-82).

2. सुपां सुलुक् छ . ऋजवः सन्तु पन्थाः पन्थानः इति प्राप्ते। परमे व्योमन् व्योमनि इति प्राप्ते। अस्मे इन्द्रा बृहस्पती युष्मास्वस्मभ्यमितिप्राप्ते शे । एवमन्ये याडादयः (VII-1-39).

अनुदात्तस्वर: सुपा-तिसृभ्यः (VI-1-166) नु 184 अनुदात्ते च, (VI-1-190, 191).

सुबन्तात् प्रत्ययविशेषा विधीयन्ते तेन प्रत्ययविशेषान्ता: सुबन्ता धातवो भवन्ति । सनाद्यन्ता धातव: (III-1-32) इति । ते च प्रत्यया:

1. क्यच् 1) इषिकर्मण: एषितृसम्बन्धिन: सुबन्तात् । पुत्रमात्मन इच्छति पुत्रीयति (III-1-8).
   2) क्यच् उपमानादाचारे। विष्णूयति द्विजम् (III-1-10).
   3) क्यच् नमोवरिवश्चित्रङ: । नमस्यति (III-1-19).
2. काम्यच् :- पुत्रकाम्यति (III-1-9).
3. क्यङ् :-
   1) उपमानात् कर्तु: सुबन्तादाचारे । कृष्णायते अप्सरायते (III-1-11)
   2. क्यङ् । अभूततद्भावविषये भवत्यर्थे भृशादिभ्यः क्यङ्, हलन्तानामेषां लोपश्च। अभृशो भृशो भवति = भृशायते । (III-1-12).
   3. कष्टाय क्रमणे । कष्टाय क्रमते पापं कर्तुमुत्सहते (III-1-14).
   4. कर्मणो रोमन्थ तपोभ्यां वर्तिचरो: । रोमन्थायते। तपस्यति (III-1-15).
   5. बाष्पोष्मभ्याम् उद्वमने। बाष्पायते फेनायते (वा) (III-1-16).
   6. सुखादिभ्य: कर्तृवेदनायाम् । सुखायते (III-1-18).
   7. शब्दवैर (III-1-17) करणेऽर्थे । शब्दायते
4. क्यष् । भवत्यर्थे लोहितायति -ते । पटपटायते । वा क्यष: (I-3-90) इति वा परस्मैपदम् (IV-1-13).
5. णिङ् । उत्पुच्छयते– सञ्चीवरयते भिक्षु: (III-1-20).
   अङ्गान्निरसे (वा) हेतुमति च (III-1-26).
6. 1) णिच् । मुण्डमिश्र (III-1-21) मुण्डयते
   2) सत्याप (III-1-25) सत्यापयति । चोरयति
   3) हेतुमति च । कारयति (III-1-26).

## सुहृत्

सुहृत् आदेशः मित्रे (V-4-150)

## से

कृत् :- तुमुन्नर्थे छ · (III-4-9).

तिङ् :- थासस्से (III-4-80).

## सेट्

संज्ञा :- इडागमसहितः सेट्, वेट्, अनिट् ।

## सेन्

कृत् :- तुमर्थे छ· (III-4-9).

## सोढ

निपातः :- अवेः दुग्धे अविसोढमिति निपातः । अविमरीसम्

निपातः :- अविदुग्धमित्यर्थे (वा) पितृव्यमातृव्य (IV-2-36).

## स्कन्धच्

तद्धितः :- समूहार्थे। नरस्कन्धः। करिस्कन्धः। तुरगस्कन्धः (वा) इनित्रट्यचश्च(IV-2-51).

## स्न

तद्धितः :- प्रशंसाय म्-मृत्स्ना (V-4-40).

### स्नञ्

तद्धितः :- स्त्रीपुंसानां न्ञ् स्नञौ। पौस्नम् (IV-1-87).

## स्मन्

उणादि :- सूचे : सूक्ष्मम् (616).

## स्मात्

सुप् :- ङसिङ्योः स्मात् स्मिनौ। तस्मात् (VII-1-15,16).

# स्मिन्

सुप् :– ङसिङसोः। तस्मिन् (VII-1-15, 16).

## स्मै

सुप् :- तस्मै (VII-1-14).

# स्य

सुप् :– टाङसिङसामिनात्स्याः। रामस्य (VII-1-12).

सुप् :– स्यतासी ऌ लुटोः। भविष्यति। अभविष्यत् (III-1-33).

उणादि :– मदिहर्षे – मत्स्यः(544)

# स्याट्

सुप् :- "सर्वनाम्नः स्याट् ह्रस्वश्च" (VII-3-114) आबन्तात् सर्वनाम्नः ङितिः स्याट् आपश्च ह्रस्वः। सर्वस्यै सर्वस्याः (VII-3-114) विभाषा द्वितीयस्याः। द्वितीयायाः (VII-3-115).

# स्व

तिङ् :- सवाभ्यां वामौ। सकारवकाराभ्यां परस्य लोटः व आम् क्रमात् स्युः। थासस्से (III-4-80) इति से इत्यस्य स्व। एधस्व (III-4-91).

# स्वरितेत्

स्वरितञितः कर्त्रभिप्राये क्रियाफले आत्मने पदम् (I-3-72).

# ह

तद्धितः :– प्राग्देशीयेषु प्रत्ययेषु परतः इदं शब्दात् इश् इति भवति। शित् सर्वादेशः (V-3-3) इदं + त्रल्। इह + त्रल् = किं सर्वनामबहुभ्यः कुत्र, तत्र, बहुत्र (V-3-10) इदं शब्दात् हः भवति। त्रलोपवादः। इह V-3-11)

**तिङ्** :- तासेः अस्तेश्च सस्य हः। कर्ताहे। व्यतिहे (VII-4-52).

**तद्धितः** :- छ. किम + ङि = कुह। पक्षे कुत्र (V-3-13).

# हल्

**संज्ञा** :- 1. हलन्तलक्षणावृद्धि। वदव्रज (VII-2-3) अपाक्षीत्

**संज्ञा** :- 2. हलान्ताच्च सनः कित्वातिदेशः। गुणाभावः। चिचीषति (I-2-11).

**प्रत्याहारः** :- 3. हलोऽनन्तरास्संयोगः (I-1-7).

4. नाज्झलौ (I-1-10).

## हश्

**प्रत्याहारः** :- हशि च (VI-1-114).

# हि

**तिङ्** :- सेर्ह्यपिच्च लोटः सेः हिः। पुनीहि (III-4-87).

**तिङ्** :- 1. हुझल्भ्यो हेर्धिः। जुहुधि। छिन्धि(VI-4-101).

2. छ. श्रु श्रृणु श्रुधीहवं (VI-4-102).

**तिङ्** :- 1. हेर्लुक् अतोऽङ्गस्य। पच। पठ (VI-4-105).

2. उतश्च प्रत्ययात्। चिनु। कुरु (VI-4-106).

**आदेशः** :- दधातेः तकारादौ किति। हितः। हितवान् (VII-4-4).

**आदेशः** :- जहातेः क्त्वापरतः हित्वा (VII-4-43).

**आदेशः** :- छ. वा हित्वा शरीरं, हत्वा वा (VII-4-44).

# हिल्

एतर्हि (V-3-16-2021) लः स्वरार्थम्

## हृत्

**आदेशः** :- हृदयस्य हृत् (VI-3-50-51).

# हेतु

**तिङ्** :- हेतुः = कारणं, हेतुमत् = कार्यं-एतयोर्वाच्ययोः लिङ्। पक्षे लृट्
कृष्णं नमेच्चेत्(हेतु) सुखं यायात् (हेतुमत्) कृष्णं नंस्यति चेत् सुखं यास्यति (III-3-126).

# हेतुमत्

**तिङ्** :- प्रयोजकव्यापारे प्रेषणादौ वाच्ये णिच् । भवन्तं प्रेरयति = भावयति । हेतुरयं स्वतन्त्रस्य कर्तुः व्यापारस्य प्रयोजकः प्रेषणादिः तदीयो व्यापारः। प्रेषणादिः हेतुमान्। तस्मिन्नभिधेये धातोः णिच् भवति (III-1-26).

—)()(—